श्रीगणेशायनमः॥ ॥अथनवग्रहस्तोत्रप्रारंभः॥ ॥जपाकुसु-
मसंकाशंकाश्यपेयंमहद्युतिम्॥तमोरिंसर्वपापघ्नंप्रणतोस्मिदिवाक
रम्॥१॥दधिशंखतुषाराभंक्षीरोदार्णवसंभवम्॥नमामिशशिनंसोमं
शंभोर्मुकुटभूषणम्॥२॥धरणीगर्भसंभूतंविद्युत्कांतिसमप्रभम्॥कुमा
रंशक्तिहस्तंतंमंगलंप्रणमाम्यहम्॥३॥प्रियंगुकलिकाश्यामंरूपेणाप्र-
तिमंबुधम्॥सौम्यंसौम्यगुणोपेतंतंबुधंप्रणमाम्यहम्॥४॥देवानांचऋ
षीणांचगुरुंकांचनसंन्निभम्॥बुद्धिभूतंत्रिलोकेशंतंनमामिबृहस्पति
म्॥५॥हेमकुंदमृणालाभंदैत्यानांपरमंगुरुम्॥सर्वशास्त्रप्रवक्तारंभार्ग
वंप्रणमाम्यहम्॥६॥नीलांजनसमाभासंरविपुत्रंयमाग्रजम्॥छाया-
मार्त्तंडसंभूतंतंनमामिशनैश्चरम्॥७॥अर्धकायंमहावीर्यंचंद्रादित्यवि
मर्दनम्॥सिंहिकागर्भसंभूतंतंराहुंप्रणमाम्यहम्॥८॥पलाशपुष्पसंकाशं

तारकाग्रहमस्तकम्॥ रौद्रंरौद्रात्मकंघोरंतंकेतुंप्रणमाम्यहम्॥९॥इतिव्यास
मुखोद्गीतंयःपठेत्सुसमाहितः॥दिवावायदिवारात्रौविघ्नशांतिर्भविष्यति॥१०
नरनारीनृपाणांचभवेद्दुःस्वप्ननाशनम्॥ऐश्वर्यमतुलंतेषामारोग्यंपुष्टिव-
र्धनम्॥११॥ग्रहनक्षत्रजाःपीडास्तस्कराग्निसमुद्भवाः॥ताःसर्वाःप्रशमंया-
तिव्यासोब्रूतेनसंशयः॥१२॥ ॥इतिश्रीव्यासविरचितंआदित्यादिनवग्रह-
स्तोत्रंसंपूर्णम्॥ ॥श्रीभास्करायनमः॥ ॥शतानीकउवाच॥ ॥क
थमादित्यमुद्यंतमुपतिष्ठेद्द्विजोत्तम॥एतन्मेब्रूहिविप्रेंद्रप्रपद्येशरणंतव॥१॥
॥सुमंतुरुवाच॥ ॥इदमेवपुरापृष्टः शंखचक्रगदाधरः॥प्रणम्यशिरसादे
वमर्जुनेनमहात्मना॥२॥कुरुक्षेत्रेमहाराजनिवृत्तेभारतेरणे॥कृष्णनाथंस-
मासाद्यप्रार्थयित्वाब्रवीदिदम्॥३॥ ॥अर्जुनउवाच॥ ॥ज्ञानंचधर्मशा
स्त्राणांगुह्याद्गुह्यतरंतथा॥मयाकृष्णपरिज्ञातंवाङ्मयंसचराचरम्॥४॥

र. सूर्यस्तुतिमयंन्यासंवक्तुमर्हसिमाधव॥भक्त्यापृच्छामिदेवेशकथयस्वप्रसा स्तो.
२. दतः॥५॥सूर्यभक्तिंकरिष्यामिकथंसूर्यंप्रपूजयेत्॥तदहंश्रोतुमिच्छामित्वत्प्रसा
देनयादव॥६॥ ॥श्रीभगवानुवाच॥ ॥रुद्रादिदैवतैःसर्वैःपृष्टेनकथितंम
या॥वक्ष्येहंसूर्यविन्यासंशृणुपांडवयत्नतः॥७॥अस्माकंयत्त्वयापृष्टमेकचि
त्तोभवार्जुन॥तदहंसंप्रवक्ष्यामिआदिमध्यावसानकम्॥८॥ ॥अर्जुनउवा
च॥ ॥नारायणसुरश्रेष्ठपृच्छामित्वांमहायशाः॥कथमादित्यमुद्यंतमुपति-
ष्ठेत्सनातनम्॥९॥ ॥श्रीभगवानुवाच॥ ॥साधुपार्थमहाबाहोबुद्धि-
मानसिपांडव॥यन्मांपृच्छस्युपस्थानंतत्पवित्रंविभावसोः॥१०॥सर्वमंगल
मांगल्यंसर्वपापप्रणाशनम्॥सर्वरोगप्रशमनमायुर्वर्धनमुत्तमम्॥११॥
अमित्रदमनंपार्थसंग्रामेजयवर्धनम्॥वर्धनंधनपुत्राणामादित्यहृदयंशृ २
णु॥१२॥यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः॥त्रिषुलोकेषुविख्या

तंनिःश्रेयसकरंपरम्॥१३॥देवदेवंनमस्कृत्यप्रातरुत्थायचार्जुन॥विघ्नान्यनेक
रूपाणिनश्यंतिस्मरणादपि॥१४॥तस्मात्सर्वप्रयत्नेनसूर्यमाराधयेत्सदा॥आ
दित्यहृदयंनित्यंजाप्यंतच्छृणुपांडव॥१५॥यज्जपान्मुच्यतेजंतुर्दारिद्र्याद्दाश्च
दुस्तरात्॥लभतेचमहासिद्धिंकुष्ठव्याधिविनाशिनीम्॥१६॥अस्मिन्मंत्रेऋषि
श्छंदोदेवताशक्तिरेवच॥सर्वमेवमहाबाहोकथयामितवाग्रतः॥१७॥मया
तेगोपितंन्यासंसर्वशास्त्रप्रबोधितम्॥अथतेकथयिष्यामिउत्तमंमंत्रमेवच
॥१८॥ओंअस्यश्रीआदित्यहृदयस्तोत्रमंत्रस्य॥श्रीकृष्णऋषिः॥श्रीसूर्या-
त्माचित्रभुवनेश्वरोदेवता॥अनुष्टुप्छंदांसि॥हरितहयरथंदिवाकरंघृणिरिति
बीजम्॥ओंनमोभगवतेजितवैश्वानरजातवेदसेइतिशक्तिः॥ओंनमोभगवते
आदित्यायनमइतिकीलकम्॥ओंअग्निगर्भदेवताइतिमंत्रः॥ओंनमोभगव
तेतुभ्यमादित्यायनमोनमः॥श्रीसूर्यनारायणप्रीत्यर्थेजपेविनियोगः॥ ॥

॥अथन्यासः॥ ॥ओंन्ह्रांअंगुष्ठाभ्यांनमः॥ओंन्ह्रींतर्जनीभ्यांनमः॥ओंन्ह्रूंमध्य
माभ्यांनमः॥ओंन्ह्रैंअनामिकाभ्यांनमः॥ओंन्ह्रौंकनिष्ठिकाभ्यांनमः॥ओंन्ह्रःक
रतलकरपृष्ठाभ्यांनमः॥ओंन्ह्रांहृदयायनमः॥ओंन्ह्रींशिरसेस्वाहा॥ओंन्ह्रूं
शिखायैवषट्॥ओंन्ह्रैंकवचायहुम्॥ओंन्ह्रौंनेत्रत्रयायवौषट्॥ओंन्ह्रःअस्त्रा
यफट्॥ओंन्ह्रांन्ह्रींन्ह्रूंन्ह्रैंन्ह्रौंन्ह्रःइतिदिग्बंधः॥ ॥अथध्यानम्॥ ॥भास्वद्-
रत्नाढ्यमौलिंस्फुरदधररुचारंजितंचारुकेशंभास्वंतंदिव्यतेजःकरकमलयुतं
स्वर्णवर्णप्रभाभिः॥विश्वाकाशावकाशाग्रहपतिशिखरेभातियश्चोदयाद्रौस
र्वानंदप्रदाताहरिहरनमितःपातुमांविश्वचक्षुः॥१॥पूर्वमष्टदलंपद्मंप्रणवा
दिप्रतिष्ठितम्॥मायाबीजंदलाष्टाग्रेयंत्रमुद्धारयेदिति॥२॥आदित्यंभास्क
रंभानुंरविंसूर्यंदिवाकरम्॥मार्त्तंडंतपनंचेतिदलेष्वष्टस्कयोजयेत्॥३॥दी
प्तासूक्ष्माजयाभद्राविभूतिर्विमलातथा॥अमोघाविद्युतान्तेनिमध्येश्रीःस

र्वतोसुखी॥४॥सर्वज्ञःसर्वगश्चैवसर्वकारणदेवता॥सर्वेशंसर्वहृदयंनमामिस
र्वसाक्षिणम्॥५॥सर्वात्मासर्वकर्त्ताचसर्वजीवनपालकः॥हितःस्वर्गापवर्गश्च
भास्करेशनमोस्तुते॥६॥ ॥इतिप्रार्थना॥ ॥नमोनमस्तेस्तुसदाविभावसो
सर्वात्मनेसप्तहयायभानवे॥अनंतशक्तिर्मणिभूषणेनददस्वभुक्तिंममसु
क्तिमव्ययाम्॥७॥अर्कंतुमूर्ध्निविन्यस्यललाटेतुरविंन्यसेत्॥विन्यसेन्नेत्रयोः
सूर्यंकर्णयोश्चदिवाकरम्॥८॥नासिकायांन्यसेद्भानुंमुखेवैभास्करंन्यसेत्॥
पर्जन्यमोष्ठयोश्चैवतीक्ष्णंजिह्वांतरेन्यसेत्॥९॥सुवर्णरेतसंकंठेस्कंधयोस्ति
ग्मतेजसम्॥बाह्वोस्तुपूषणंचैवमित्रंवैपृष्ठतोन्यसेत्॥१०॥वरुणंदक्षिणेह
स्तेत्वष्टारंवामतःकरे॥हस्तावुष्णकरःपातुहृदयंपातुभानुमान्॥११॥उदरे
तुमयंविद्यात्आदित्यंनाभिमंडले॥कट्यांतुविन्यसेद्धंसंरुद्रमूर्वोस्तुविन्यसे
त्॥१२॥जान्वोस्तुगोपतिंन्यस्यसवितारंतुजंघयोः॥पादयोश्चविवस्वंतंगुल्फ

योऽश्वदिवाकरम्॥१३॥बात्यतस्तुतमोध्वंसंभगमभ्यंतरेन्यसेत्॥सर्वांगेषुसहस्रांशुंदिग्विदिक्षुभगंन्यसेत्॥१४॥ ॥इतिदिग्बंधः॥ ॥एषआदित्यविन्यासोदेवानामपिदुर्लभः॥इमंभक्त्यान्यसेत्पार्थसयातिपरमांगतिम्॥१५॥कामक्रोधकृतात्पापान्मुच्यतेनात्रसंशयः॥सर्पादपिभयंनैवसंग्रामेषुपथिष्वपि॥१६॥रिपुसंघट्टकालेषुतथाचोरसमागमे॥त्रिसंध्यंजपतोन्यासंमहापातकनाशनम्॥१७॥विस्फोटकसमुत्पन्नंतीव्रज्वरसमुद्भवम्॥शिरोरोगंनेत्ररोगंसर्वव्याधिविनाशनम्॥१८॥कुष्ठव्याधिस्तथादद्रुरोगाश्चविविधाश्चये॥जपमानस्यनश्यंतिशृणुभक्त्यातदर्जुन॥१९॥आदित्योमंत्रसंयुक्तआदित्योभुवनेश्वरः॥आदित्यान्नापरोदेवोह्यादित्यःपरमेश्वरः॥२०॥आदित्यमर्च्चयेद्ब्रह्माशिवआदित्यमर्च्चयेत्॥यदादित्यमयंतेजोममतेजस्तदर्जुन॥२१॥आदित्यंमंत्रसंयुक्तमादित्यंभुवनेश्वरम्॥आदित्यंयेप्रपश्यंतिमांपश्यंतिनसंशयः॥२२॥त्रिसंध्य

मर्चयेत्सूर्यंस्मरेद्भक्त्यातुयोनरः॥नसपश्यतिदारिद्र्यंजन्मजन्मनिचार्जुन॥२३॥
एतत्तेकथितंपार्थआदित्यहृदयंमया॥मुच्यतेसर्वपापेभ्यःसूर्यलोकेमहीयते॥
॥२४॥नमोभगवतेतुभ्यमादित्यायनमोनमः॥आदित्यःसवितासूर्यःखगःपूषाग
भस्तिमान्॥२५॥सुवर्णस्फटिकोभानुःस्फुरितोविश्वतापनः॥रविर्विश्वोमहातेजाः
सुवर्णःसुप्रबोधकः॥२६॥हिरण्यगर्भस्त्रिशिरास्तपनोभास्करोरविः॥मार्त्तंडो
गोपतिःश्रीमान्कृतज्ञश्चप्रतापवान्॥२७॥तमिस्रहाभगोहंसोनासत्यश्चतमोनु
दः॥शुद्धोविरोचनःकेशीसहस्रांशुर्महाप्रभुः॥२८॥विवस्वान्पूषणोमृत्युर्मिहिरोजा
मदग्न्यजित्॥घर्मरश्मिःपतंगश्चशरण्योमित्रहातपः॥२९॥दुर्विज्ञेयगतिःशूरस्ते
जोराशिर्महायशाः॥शंभुश्चित्रांगदःसौम्योहव्यकव्यप्रदायकः॥३०॥अंशुमानुत्त
मोदेवऋग्यजुःसामएवच॥हरिदश्वस्तमोदारःसप्तसप्तिर्मरीचिमान्॥३१॥अग्नि
गर्भोदितेःपुत्रःशंभुस्तिमिरनाशनः॥पूषाविश्वंभरोमित्रःसुवर्णःसुप्रतापवान्

र॰ ॥३२॥आतपीमंडलीभास्वान्तपनःसर्वतापनः॥कृतविश्वोमहातेजाःसर्वरत्नम स्तो॰
५ योद्भवः॥३३॥अक्षरश्चाक्षरश्चैवप्रभाकरविभाकरौ॥चंद्रश्चंद्रांगदःसौम्योह-
व्यकव्यप्रदायकः॥३४॥अंगारकोंगदोहस्तीरक्तांगश्चांगवर्धनः॥बुधोबुद्धासनोबु
द्धिर्बुद्धात्माबुद्धिवर्धनः॥३५॥बृहद्भानुर्बृहद्भासोबृहद्धामाबृहस्पतिः॥शुक्रस्त्वंशु
क्ररेतास्त्वंशुक्लांगःशुक्लभूषणः॥३६॥शनिमान्शनिरूपस्त्वंशनैर्गच्छसिसर्वदा
॥अनादिरादिरादित्यस्तेजोराशिर्महातपाः॥३७॥अनादिरादिरूपस्त्वमादित्यो
दिक्पतिर्यमः॥भानुमान्भानुरूपस्त्वंस्वर्भानुर्भानुदीप्तिमान्॥३८॥धूमकेतुर्महाके
तुःसर्वकेतुरनुत्तमः॥तिमिरावरणःशंभुःस्रष्टामार्त्तंडएवच॥३९॥नमःपूर्वायगि
रयेपश्चिमायनमोनमः॥नमोत्तरायगिरयेदक्षिणायनमोनमः॥४०॥नमोनमः
सहस्रांशोत्वादित्यायनमोनमः॥नमःपद्मप्रबोधायनमस्तेद्वादशात्मने॥४१॥ ५
नमोविश्वप्रबोधायनमोभ्राजिष्णुजिष्णवे॥ज्योतिषेचनमस्तुभ्यंज्ञानार्काय

नमोनमः॥४२॥महीसायप्रगल्भायपुत्रगानायनमोनमः॥नमस्तेहोतृपतयेपृथिवीपतयेनमः॥४३॥नमोंकारवषट्कारसर्वयज्ञनमोस्तुते॥ऋग्वेदादियजुर्वेदसामवेदनमोस्तुते॥४४॥नमोहाटकवर्णायभास्करायनमोनमः॥जयायजयभद्रायहरिदश्वायतेनमः॥४५॥दिव्यायदिव्यरूपायग्रहाणांपतयेनमः॥नमस्तेशुक्लवर्येनित्यंनमःकुरुकुलात्मने॥४६॥नमस्त्रैलोक्यनाथायभूतानांपतयेनमः॥नमःकैवल्यनाथायनमस्तेदिव्यचक्षुषे॥४७॥त्वंज्योतिस्त्वंधृतिर्ब्रह्मात्वंविष्णुस्त्वंप्रजापतिः॥त्वमेवरुद्रोरुद्रात्मावायुरग्निस्त्वमेवच॥४८॥योजनानांसहस्रेद्वेद्वेशतेद्वेचयोजने॥एकेननिमिषार्धेनक्रममाणनमोस्तुते॥४९॥नवयोजनलक्षाणिसहस्राद्विशतानिच॥यावद्घटीप्रमाणेनक्रममाणनमोस्तुते॥॥५०॥अग्रतश्चनमस्तुभ्यंपृष्ठतश्चसदानमः॥पार्श्वतश्चनमस्तुभ्यंनमस्तेचास्तुसर्वदा॥५१॥नमःसुरारिहंत्रेचसोमसूर्याग्निचक्षुषे॥नमोदिव्यायव्यो

मायसर्वतंत्रमयायच॥५२॥नमोवेदांतवेद्यायसर्वकर्मादिसाक्षिणे॥नमोहरि
तवर्णायसुवर्णायनमोनमः॥५३॥अरुणोमाघमासेतुसूर्योवैफाल्गुनेतथा॥चै
त्रमासेतुवेदांगोभानुर्वैशाखतापनः॥५४॥ज्येष्ठमासेतपेदिंद्र आषाढेतपतेर
विः॥गभस्तिःश्रावणेमासेयमोभाद्रपदेतथा॥५५॥इषेसुवर्णरेताश्चकार्तिके
चदिवाकरः॥मार्गशीर्षेतपेन्मित्रःपौषेविष्णुःसनातनः॥५६॥पुरुषस्त्वधिकेमा
सेमासाधिक्येषुकल्पयेत्॥इत्येतेद्वादशादित्याःकाश्यपेयाःप्रकीर्तिताः॥५७॥
उग्ररूपामहात्मानस्तपंतेविश्वरूपिणः॥धर्मार्थकाममोक्षाणांप्रस्फुटाहेतवोनृ
प॥५८॥सर्वपापहरंचैवमादित्यंसंप्रपूजयेत्॥एकधादशधाचैवशतधाचसह
स्रधा॥५९॥तपंतेविश्वरूपेणसृजंतिसंहरंतिच॥एषविष्णुःशिवश्चैवब्रह्माचै
वप्रजापतिः॥६०॥महेंद्रश्चैवकालश्चयमोवरुणएवच॥नक्षत्रग्रहताराणामधि
पोविश्वतापनः॥६१॥वायुरग्निर्धनाध्यक्षोभूतकर्तास्वयंप्रभुः॥एषदेवोहिदेवा

नांसर्वमाप्यायतेजगत्॥६२॥एषकर्त्ताहिभूतानांसंहर्त्तारक्षकस्तथा॥एषलो-
कांलोकश्चसप्तद्वीपाश्चसागराः॥६३॥एषपातालसप्तस्थोदैत्यदानवराक्षसाः
॥एषधाताविधाताचबीजंक्षेत्रंप्रजापतिः॥६४॥एषएवप्रजानित्यंसंवर्धयति
रश्मिभिः॥एषयज्ञःस्वधास्वाहाह्रीःश्रीश्चपुरुषोत्तमः॥६५॥एषभूतात्मकोदे
वःसूक्ष्मोव्यक्तःसनातनः॥ईश्वरःसर्वभूतानांपरमेष्ठीप्रजापतिः॥६६॥काला
त्मासर्वभूतात्मावेदात्माविश्वतोमुखः॥जन्ममृत्युजराव्याधिसंसारभयना-
शनः॥६७॥दारिद्र्यव्यसनध्वंसीश्रीमान्देवोदिवाकरः॥विकर्त्तनोविवस्वांश्चमा
र्त्तंडोभास्करोरविः॥६८॥लोकप्रकाशकःश्रीमाँल्लोकचक्षुर्ग्रहेश्वरः॥लोकसा
क्षीत्रिलोकेशःकर्त्ताहर्त्तातमिस्रहा॥६९॥तपनस्तापनश्चैवशुचिःसप्ताश्ववा
हनः॥गभस्तिहस्तोब्रह्मण्यःसर्वदेवनमस्कृतः॥७०॥आयुरारोग्यमैश्वर्यंनरा-
नार्यश्चमंदिरे॥यस्यप्रसादात्संतुष्टिरादित्यहृदयंजपेत्॥७१॥इत्येतैर्नामभिः

१०· ७

पार्थआदित्यंस्तौतिनित्यशः॥प्रातरुत्थायकौंतेयतस्यरोगभयंनहि॥७२॥पात स्तो॰
कान्मुच्यतेपार्थव्याधिभ्यश्चनसंशयः॥एकसंध्यंद्विसंध्यंवासर्वपापैःप्रमुच्यते॥
॥७३॥त्रिसंध्यंजपमानस्तुपश्येच्चपरमंपदम्॥यदन्हात्कुरुतेपापंतदन्हात्प्रति
मुच्यते॥७४॥यद्रात्र्यात्कुरुतेपापंतद्रात्र्यात्प्रतिमुच्यते॥दद्रुस्फोटककुष्ठानिमं
डलानिविषूचिका॥७५॥सर्वव्याधिमहारोगभूतबाधास्तथैवच॥डाकिनीशा
किनीचैवमहारोगभयंकुतः॥७६॥येचान्येदुष्टरोगाश्चज्वरातिसारकादयः॥
जपमानस्यनश्यंतिजीवेच्चशरदांशतम्॥७७॥संवत्सरेणमरणंयदातस्य
ध्रुवंभवेत्॥अशीर्षंपश्यतिच्छायामहोरात्रंधनंजय॥७८॥यस्त्विदंपठते
भक्त्याभानोर्वारेमहात्मनः॥प्रातःस्नानेकृतेपार्थएकाग्रकृतमानसः॥७९॥
स्वर्णचक्षुर्भवतिनचांधस्तुप्रजायते॥पुत्रवान्धनसंपन्नोजायतेचारुजःस ७
खी॥८०॥सर्वसिद्धिमवाप्नोतिसर्वत्रविजयीभवेत्॥आदित्यहृदयंपुण्यंसूर्य

नामविभूषितम्॥८१॥श्रुत्वाचनिखिलंपार्थसर्वपापैःप्रमुच्यते॥अतःपरतरंना
स्तिसिद्धिकामस्यपांडव॥८२॥एतज्जपस्वकौंतेययेनश्रेयोत्यवाप्स्यसि॥आदि
त्यहृदयंनित्यंयःपठेत्सुसमाहितः॥८३॥भ्रूणहामुच्यतेपापात्कृतघ्नोब्रह्मघात
कः॥गोघ्नःसुरापोदुर्भोजीदुःप्रतिग्रहकारकः॥८४॥पातकानिचसर्वाणिदहत्ये
वनसंशयः॥यइदंशृणुयान्नित्यंजपेद्वापिसमाहितः॥८५॥सर्वपापविशुद्धात्मा
सूर्यलोकेमहीयते॥अपुत्रोलभतेपुत्रान्निर्धनोधनमाप्नुयात्॥८६॥कुरोगी
मुच्यतेरोगाद्भक्त्यायःपठतेसदा॥यस्त्वादित्यदिनेपार्थनाभिमात्रजलेस्थितः
॥८७॥उदयाचलमारूढंभास्करंप्रणतास्थितः॥जपतेमानवोभक्त्याशृणुयाद्वा
पिभक्तितः॥८८॥सयातिपरमंस्थानंयत्रदेवोदिवाकरः॥अमित्रदमनंपार्थयदाक
र्तुंसमारभेत्॥८९॥तदाप्रतिकृतिंकृत्वाशत्रोश्चरणपांसुभिः॥आक्रम्यवामपा
देनआदित्यहृदयंजपेत्॥९०॥एतन्मंत्रंसमाहूयसर्वसिद्धिकरंपरम्॥ ॥

॥ओंन्ह्रींह्रिमालीदंस्वाहा॥ओंन्ह्रींनिलीदंस्वाहा॥ओंन्ह्रांमालीदंस्वाहा॥इतिमंत्रः॥ ॥त्रिभिश्चरोगोभवतिज्वरोभवतिपंचभिः॥जपेस्तुसप्तभिःपार्थराक्षसींतनुमाविशेत्॥९१॥राक्षसेनाभिभूतस्यविकारान्शृणुपांडव॥गीयतेनृत्यतेनग्नआस्फोटयतिधावति॥९२॥शिवारुतंचकुरुतेहसतेक्रंदतेपुनः॥एवंसंपीड्यतेपार्थयद्यपिस्यान्महेश्वरः॥९३॥किंपुनर्मानुषःकश्चिच्छौचाचारविवर्जितः॥पीड्यतेचनसंदेहोज्वरोभवतिदारुणः॥९४॥यदात्वानुग्रहंतस्यकर्तुमिच्छेच्छुभंकरम्॥तदासलिलमादायजपेन्मंत्रमिमंबुधः॥९५॥नमोभगवतेतुभ्यमादित्यायनमोनमः॥जयायजयभद्रायहरिदश्वायतेनमः॥९६॥स्नापयेत्तेनमंत्रेणशुभंभवतिनान्यथा॥अन्यथात्वभवेद्दोषोनश्यतेनात्रसंशयः॥९७॥अतस्तेनिखिलःप्रोक्तःपूजांचैवनिबोधमे॥उपलिप्तेशुचौदेशेनियतोवाग्यतःशुचिः॥९८॥वृत्तंवाचतुरस्रंवालिप्तभूमौलिखेच्छुचिः॥त्रिधातत्रलि

खेत्पद्ममष्टपत्रंसकर्णिकम्॥९९॥अष्टपत्रंलिखेत्पद्मंलिप्तगोमयमंडले॥पूर्व
पत्रेलिखेत्सूर्यमाग्नेय्यांतुरविंन्यसेत्॥१००॥याम्यायांचविवस्वंतंनैर्ऋत्यांतुभ
गंन्यसेत्॥प्रतीच्यांवरुणंविद्यात्वायव्यांमित्रमेवच॥१॥आदित्यमुत्तरेपत्रेई
शान्यांविष्णुमेवच॥मध्येतुभास्करंविद्यात्क्रमेणैवसमर्चयेत्॥२॥अतःपरत्त
रंनास्तिसिद्धिकामस्यपांडव॥महातेजःसमुद्यंतंप्रणमेत्सकृतांजलिः॥३॥सकेस
राणिपद्मानिकरवीराणिचार्जुन॥तिलतंडुलसंयुक्तंकुशगंधोदकेनच॥४॥र
क्तचंदनमिश्राणिकृत्वावैताम्रभाजने॥धृत्वाशिरसितत्पात्रंजानुभ्यांधरणींस्पृ
शेत्॥५॥मंत्रपूतंगुडाकेशार्घ्यंदद्याद्गभस्तये॥सायुधंसरथंचैवसूर्यमावा
हयाम्यहं॥६॥स्वागतोभव॥सुप्रतिष्ठितोभव॥सन्निधोभव॥सन्निहितोभ-
व॥संमुखोभव॥इतिपंचमुद्राः॥ ॥स्फुटयित्वार्हयेत्सूर्यंभक्तिंमुक्तिंलभेन्नरः
॥७॥ओंश्रींविद्यांकिलिकिलिकटकेष्टसर्वार्थसाधनायस्वाहा॥ओंश्रींन्हींन्हः

हंसः सूर्यायनमःस्वाहा ॥ ओंश्रींह्रांह्रींह्रूंह्रैंह्रौंह्रः सूर्यमूर्त्तयेस्वाहा ॥ ओंश्रीं
ह्रींरवंरवः लोकायसर्वमूर्त्तयेस्वाहा ॥ ओंह्रूंमार्त्तंडायस्वाहा ॥ नमोस्तुसूर्याय
सहस्रभानवेनमोस्तुवैश्वानरजातवेदसे ॥ त्वमेवचार्घ्यंप्रतिगृण्हदेवदेवाधि
देवायनमोनमस्ते ॥ ८ ॥ नमोभगवतेतुभ्यंनमस्तेजातवेदसे ॥ दत्तमर्घ्यंमया
भानोत्वंगृहाणनमोस्तुते ॥ ९ ॥ एहिसूर्यसहस्रांशोतेजोराशेजगत्पते ॥ अनु
कंपयमांदेवगृहाणार्घ्यंनमोस्तुते ॥ १० ॥ नमोभगवतेतुभ्यंनमस्तेजातवेदसे
॥ ममेदमर्घ्यंगृण्हत्वंदेवदेवनमोस्तुते ॥ ११ ॥ सर्वदेवाधिदेवाय आधिव्याधि
विनाशिने ॥ इदंगृहाणमेदेवसर्वव्याधिर्विनश्यतु ॥ १२ ॥ नमः सूर्यायशांता
यसर्वरोगविनाशिने ॥ ममेप्सितंफलंदत्वाप्रसीदपरमेश्वर ॥ १३ ॥ ओंनमो
भगवतेसूर्यायस्वाहा ॥ ओंशिवायस्वाहा ॥ ओंसर्वात्मनेसूर्यायनमःस्वा-
हा ॥ ओंअक्षय्यतेजसेनमःस्वाहा ॥ ॥ सर्वसंकष्टदारिद्र्यंशत्रुंनाशयन्

शय॥सर्वलोकेषुविश्वात्मासर्वात्मासर्वदर्शकः॥१४॥नमोभगवतेसूर्यकु
ष्टरोगान्विखंडय॥आयुरारोग्यमैश्वर्यंदेहिदेवनमोस्तुते॥१५॥नमोभग
वतेतुभ्यमादित्यायनमोनमः॥ओंअक्षय्यतेजसेनमः॥ओंसूर्यायनमः
॥ओंविश्वमूर्त्तयेनमः॥ ॥आदित्यंचशिवंविद्यात्शिवमादित्यरूपिणम्
॥उभयोरंतरंनास्तिआदित्यस्यशिवस्यच॥१६॥एतदिच्छाम्यहंश्रोतुंपुरु
षोवेदिवाकरः॥उदयेब्रह्मणोरूपेमध्यान्हेतुमहेश्वरः॥१७॥अस्तमानेस्व
यंविष्णुस्त्रिमूर्तिश्चदिवाकरः॥नमोभगवतेतुभ्यंविष्णवेप्रभविष्णवे॥१८
॥ममेदमर्घ्यंप्रतिगृण्हदेवदेवाधिदेवायनमोनमस्ते॥श्रीसूर्यायसांगायस
परिवारायश्रीसूर्यनारायणायेदमर्घ्यम्॥१९॥हिमघ्नायतमोघ्नायरक्षोघ्ना
यचतेनमः॥कृतघ्नघ्नायसत्यायतस्मैसूर्यात्मनेनमः॥२०॥जयोजयश्चविज
योजितप्राणोजितश्रमः॥मनोजवोजितक्रोधोवाजिनःसप्तकीर्तिताः॥२१॥

र. हरितहयरथंदिवाकरंकनकमयांबुजरेणुपिंजरम्॥प्रतिदिनमुदयेनवंनवंशर- स्तो.
१० णमुपैमिहिरण्यरेतसम्॥२२॥नतंव्यालाःप्रबाधंतेनव्याधिभ्योभयंभवेत्॥
ननागेभ्योभयंचैवनचभूतभयंक्वचित्॥२३॥अग्निशत्रुभयंनास्तिपार्थिवे
भ्यस्तथैवच॥दुर्गतिंतरतेघोरांप्रजांचलभतेपशून्॥२४॥सिद्धिकामोलभे
त्सिद्धिंकन्याकामस्तुकन्यकाम्॥एतत्पठेत्सकौंतेयभक्तियुक्तेनचेतसा॥
॥२५॥अश्वमेधसहस्रस्यवाजपेयशतस्यच॥कन्याकोटिसहस्रस्यदत्तस्य
फलमाप्नुयात्॥२६॥इदमादित्यहृदयंयोधीतेसततंनरः॥सर्वपापविशुद्धा
त्मासूर्यलोकेमहीयते॥२७॥नास्त्यादित्यसमोदेवोनास्त्यादित्यसमागतिः॥
प्रत्यक्षोभगवान्विष्णुर्येनविश्वंप्रतिष्ठितम्॥२८॥नवतिर्योजनंलक्षंसहस्रा
णिशतानिच॥यावद्घटीप्रमाणेनतावच्चरतिभास्करः॥२९॥गवांशतसहस्र १०
स्यसम्यक्दत्तस्ययत्फलम्॥तत्फलंलभतेविद्वान्शांतात्मास्तौतियोरविम्॥

॥३०॥ योधीनेसूर्यहृदयंसकलंसफलंभवेत्॥ अष्टानांब्राह्मणानांचलेखयि
त्वासमर्पयेत्॥३१॥ ब्रह्मलोकमृषीणांचजायतेमानुषोपिवा॥ जातिस्मरत्व
माप्नोतिशुद्धात्मानात्रसंशयः॥३२॥ अजायलोकत्रयपावनायभूतात्मनेगो-
पतयेवृषाय॥ सूर्यायसर्वप्रलयांतकायनमोमहाकारुणिकोत्तमाय॥३३॥
विवस्वतेज्ञानभृतांतरात्मनेजगत्प्रदीपायजगद्धितैषिणे॥ स्वयंभुवेदीप्तसह
स्रचक्षुषेसुरोत्तमायामिततेजसेनमः॥३४॥ सुरैरनेकैःपरिसेविताय हिर
ण्यगर्भायहिरण्मयाय॥ महात्मनेमोक्षपदायनित्यंनमोस्तुतेवासरकारणा
य॥३५॥ आदित्यश्चार्चितोदेव आदित्यःपरमंपदम्॥ आदित्योमातृको भूत्वा-
आदित्योवाङ्मयंजगत्॥३६॥ आदित्यंपश्यतेभक्त्यामांपश्यतिध्रुवंनरः॥
नादित्यंपश्यतेभक्त्यानसपश्यतिमांनरः॥३७॥ त्रिगुणंचत्रितत्त्वंचत्रयोदेवा
स्त्रयोग्नयः॥ त्रयाणांचत्रिमूर्त्तिस्त्वंतुरीयस्त्वंनमोस्तुते॥३८॥ नमःसवित्रे

जगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयायत्रिगुणात्मधा-
रिणेविरिंचिनारायणशंकरात्मने ॥ ३९ ॥ यस्योदयेनेहजगत्प्रबुध्यतेप्रवर्त्तते
चाखिलकर्मसिद्धये ॥ ब्रह्मेंद्रनारायणरुद्रवंदितःसनःसदायच्छतुमंगलंरविः
॥ ४० ॥ नमोस्तुसूर्यायसहस्ररश्मयेसहस्रशाखान्वितसंभवात्मने ॥ सहस्र
योगोद्भवभावभागिनेसहस्रसंख्यायुगधारिणेनमः ॥ ४१ ॥ यन्मंडलंदीप्ति
करंविशालंरत्नप्रभंतीव्रमनादिरूपम् ॥ दारिद्र्यदुःखक्षयकारणंचपुना-
तुमांतत्सवितुर्वरेण्यम् ॥ ४२ ॥ यन्मंडलंदेवगणैःसुपूजितंविप्रैःस्तुतंभाव
नमुक्तिकोविदम् ॥ तंदेवदेवंप्रणमामिसूर्यंपुनातुमांतत्सवितुर्वरेण्यम् ॥
॥ ४३ ॥ यन्मडलंज्ञानमयंत्वगम्यंत्रैलोक्यपूज्यंत्रिगुणात्मरूपम् ॥ समस्त
तेजोमयदिव्यरूपंपुनातुमांतत्सवितुर्वरेण्यम् ॥ ४४ ॥ यन्मंडलंगूढमति
प्रबोधंधर्मस्यवृद्धिंकुरुतेजनानां ॥ तत्सर्वपापक्षयकारणंचपुनातुमांत

त्सवितुर्वरेण्यम्॥४५॥यन्मंडलंव्याधिविनाशदक्षंयदृग्यजुःसामसुसंप्र
गीतम्॥प्रकाशितंयेनचभूर्भुवःस्वःपुनातुमांतत्सवितुर्वरेण्यम्॥४६॥य
न्मंडलंवेदविदोवदंतिगायंतियच्चारणसिद्धसंघाः॥यद्योगिनोयोगजुषांच
संघाःपुनातुमांतत्सवितुर्वरेण्यम्॥४७॥यन्मंडलंसर्वजनेषुपूजितंज्योति
श्चकुर्यादिहमर्त्यलोके॥यत्कालकालादिमनादिरूपंपुनातुमांतत्सवितुर्व
रेण्यम्॥४८॥यन्मंडलंविष्णुचतुर्मुखाख्यंयदक्षरंपापहरंजनानाम्॥य
त्कालकल्पक्षयकारणंचपुनातुमांतत्सवितुर्वरेण्यम्॥४९॥यन्मंडलंवि
श्वसृजांप्रसिद्धमुत्पत्तिरक्षाप्रलयप्रगल्भम्॥यस्मिन्जगत्संहरतेखि
लंचपुनातुमांतत्सवितुर्वरेण्यम्॥५०॥यन्मंडलंसर्वगतस्यविष्णोरात्मा
परंधामविशुद्धतत्वम्॥सूक्ष्मांतरैर्योगिपथानुगम्यंपुनातुमांतत्सवितुर्व-
रेण्यम्॥५१॥यन्मंडलंब्रह्मविदोवदंतिगायंतियच्चारणसिद्धसंघाः॥य

न्मंडलंवेदविदः स्मरंतिपुनातुमांतत्सवितुर्वरेण्यम्॥५२॥यन्मंडलंवेदविदो
पगीतंयद्योगिनांयोगपथानुगम्यम्॥तत्सर्ववेदंप्रणमामिसूर्यंपुनातुमांत-
त्सवितुर्वरेण्यम्॥५३॥मंगलाष्टमिदंपुण्यंयःपठेत्सततंनरः॥ सर्वपापवि-
शुद्धात्मासूर्यलोकेमहीयते॥५४॥ ध्येयःसदासवितृमंडलमध्यवर्तीनाराय
णःसरसिजासनसंन्निविष्टः॥केयूरवान्मकरकुंडलवान्किरीटीहारीहिर-
ण्मयवपुर्धृतशंखचक्रः॥५५॥सशंखचक्रंरविमंडलेस्थितंकुशेशयाक्रां
तमनंतमच्युतम्॥भजामिबुद्ध्यातपनीयमूर्त्तिंसुरोत्तमंचित्रविभूषणो-
ज्ज्वलम्॥५६॥एवंब्रह्मादयोदेवाऋषयश्चतपोधनाः॥कीर्त्तयंतिसुरश्रेष्ठं
देवंनारायणंविभुम्॥५७॥वेदवेदांगशरीरंदिव्यदीप्तिकरंपरम्॥रक्षोघ्नं
रक्तवर्णंचसृष्टिसंहारकारकम्॥५८॥एकचक्ररथोयस्यदिव्यःकनकभू-
षितः॥समेभवतुसुप्रीतःपद्महस्तोदिवाकरः॥५९॥आदित्यःप्रथमन्ना

मद्वितीयंतुदिवाकरः॥तृतीयंभास्करःप्रोक्तंचतुर्थंतुप्रभाकरः॥६०॥पंचमं
तुसहस्रांशुःषष्ठंचैवत्रिलोचनः॥सप्तमंहरिदश्वश्चअष्टमंचविभावसुः॥६१
॥नवमंदिनकृत्प्रोक्तंदशमंद्वादशात्मकम्॥एकादशंत्रयीमूर्तिर्द्वादशंसूर्यए
वच॥६२॥द्वादशादित्यनामानिप्रातःकालेपठेन्नरः॥दुःस्वप्ननाशनंचैवसर्व
दुःखंचनश्यति॥६३॥दद्रुकुष्ठहरंचैवदारिद्र्यंहरतेध्रुवम्॥सर्वतीर्थप्रदंचैव
सर्वकामप्रवर्धनम्॥६४॥यःपठेत्प्रातरुत्थायभक्त्यानित्यमिदंनरः॥सौख्य
मायुस्तथारोग्यंलभतेमोक्षमेवच॥६५॥अग्निमीळेनमस्तुभ्यमिषेत्वोर्जेस्व
रूपिणे॥अग्नआयाहिवीतस्त्वंनमस्तेज्योतिषांपते॥६६॥शन्नोदेवीनमस्तुभ्यं
जगच्चक्षुर्नमोस्तुते॥पंचमायोपवेदायनमस्तुभ्यंनमोनमः॥६७॥पद्मासनः
पद्मकरःपद्मगर्भसमद्युतिः॥सप्ताश्वरथसंयुक्तोद्विभुजःस्यात्सदारविः॥६८
॥आदित्यस्यनमस्कारंयेकुर्वंतिदिनेदिने॥जन्मांतरसहस्रेषुदारिद्र्यंनोपजा-

 

यते॥६९॥उदयगिरिमुपेतंभास्करंपद्महस्तंनिखिलभुवननेत्रंरत्नरत्नोपमे
यम्॥तिमिरकरिमृगेंद्रंबोधकंपद्मिनीनांसुरवरमभिवंदेसुंदरंविश्ववंद्यम्
॥७०॥ ॥इतिश्रीभविष्योत्तरपुराणेश्रीकृष्णार्जुनसंवादेआदित्यहृदयं
समाप्तम्॥ ॥७॥अथविरुद्धचंद्रस्यशांतिर्लिख्यते॥ ॥जन्मकालेगो
चरेचदशास्वंतर्दशासुच॥चंद्रेविरुद्धेलोकानांपीडास्यात्तद्विधानतः॥१॥ज
न्मकालेष्टमेषष्ठेचंद्रेमृत्युर्नसंशयः॥पापयुक्तेमहत्कष्टंतच्छांतिरभिधीयते
॥२॥सुज्ञंसुपंडितंशांतंविद्वांसंब्राह्मणंकविम्॥तंपृच्छेत्सुविनीतात्मापी
डाचंद्रोद्भवायदि॥३॥जपंदानंतथाहोमंप्रकर्त्तव्यंनृणामिह॥ब्राह्मणोक्तंच
तत्कुर्यात्तज्ज्योतिःशास्त्रानुसारतः॥४॥जपेच्चंद्रमसंपूर्वंगायत्र्यालक्षजाप-
कम्॥शिवपूजाथवाकार्यादुग्धेनचजलादिना॥५॥दानंस्वशक्त्याकर्त्तव्यंवि
त्तशाठ्यंविवर्जयेत्॥चंद्रदानंप्रवक्ष्यामिलोकानांहितकाम्यया॥६॥राजति- 

ध्र्यंगुलामूर्त्तिः कार्याचंद्रस्यनिर्मला॥ तांपूजयेच्चंदनाद्यैः कर्पूरागरुधूपकैः॥७॥
पुष्पैर्नानाविधैश्चैवजलजैः कमलैस्तथा॥ नीराजनैश्चनैवेद्यैः पयोभिरन्वितैस्त
था॥८॥ अर्घ्यंदद्याच्चंद्रमसे भक्त्याप्रयतमानसः॥ नारिकेरेणपूगेनकालोचित
फलेनवा॥९॥ चंद्रध्यानंप्रवक्ष्यामिलोकानांपुष्टिहेतवे॥ ध्यानंयस्यशशांकस्यपी
डोपद्रवनाशनम्॥१०॥ श्वेतवर्णंशीतरश्मिंद्विभुजंभुवनार्चितम्॥ गदावरधरं
शांतमिंदुमंडलसंस्थितम्॥११॥ मृगारूढंद्विजंशांतंत्वोषधीशंवरप्रदम्॥ रोहि
णीसहितंध्यायेत्सर्वकामफलप्रदम्॥१२॥ सद्राग्विलासोऽमलधिःसकामोन-
क्षत्राधिपःकुंचितकृष्णकेशः॥ कफानिलात्मांबुजपत्रनेत्रोनक्षत्रनाथःसप्र
गोतिगौरः॥१३॥ एवंध्यानंचंद्रमसःस्तवपूर्वंसनातनम्॥ प्रांजलिःप्रयतोभू
त्वाजितवाक्कायमानसः॥१४॥ नमश्चंद्रायशशिनेनमस्तेतारकाधिप॥ ओष
धीशायचनमःशर्वरीपतयेनमः॥१५॥ अजचंद्रनमस्तुभ्यंनमस्तेशिवरूपि

णे॥सोमायसौम्यरूपायनमस्तेमृतरूपिणे॥१६॥अत्रिपुत्रायाब्धिजायद्विज
राजनमोस्तुते॥यामिनीशायशुद्धायकलाधीशायतेनमः॥१७॥कालाय काल
रूपायनमस्तेकालसाक्षिणे॥कालांगायनमस्तुभ्यंकालकर्त्रेनमोनमः॥१८॥
तमोनुदायनमस्तेतमिस्रपतयेनमः॥नमस्तेदक्षगुरवेकामभिन्नायतेनमः॥
॥१९॥कुमुदप्रबोधायदक्षायचनमोनमः॥मृगांकायचक्षेत्रायक्षेत्राधीशाय
तेनमः॥२०॥क्षपाचरायक्षेमायक्षेत्राधीशायतेनमः॥सागरायनमस्तुभ्यंनमस्ते
सागरात्मज॥२१॥एवंकृत्वास्तुतिंभक्त्यादंडवत्प्रणमेद्भुवि॥प्रांजलिःपुनरुत्थाप
वारंवारंनमेत्सुधीः॥२२॥ ॥अथमंडलपूजा॥ ॥मंडलंचतुरस्रंचषोड-
शांगुलसंमितम्॥कारयेद्राजतंशुद्धंतदभावेचतंडुलाः॥२३॥चतुर्दिक्षुनाम
भिस्तैःपूजयेच्छशलांछनम्॥मध्येमूर्त्तिसमालिख्यपूजयेच्चंदनादिभिः॥
॥२४॥पूर्वेषट्नामभिःपूज्यःपंचभिश्चततस्तथा॥ओषधीशःक्षपानाथोद्वि

जराजो हिमांशुकः ॥२५॥ सोमश्वरात्रिनाथश्चतारकेशो हिमद्युतिः ॥ हरिणांकः
शशांकश्च सुधारश्मिर्निशाकरः ॥२६॥ इंदुश्चाब्जश्च नक्षत्रकलानिधिरपांपतिः
॥ कौमुदीशो त्रिपुत्रश्चलक्ष्मीभ्राताशशी विधुः ॥२७॥ एतानि सोमनामानि पू-
र्वादिदिक्षु च क्रमात् ॥ तंडुलैः शतपत्रैश्च सौवर्णै राजतैस्ततः ॥२८॥ ज्येष्ठमासे
द्वितीयायां मृगर्क्षे सोमवासरे ॥ मृगसंस्थे रवौ पूजा सूर्यपर्वशताधिका ॥२९॥ सं
पूजयेच्चंद्रमसं त्वमुना विधिना नरः ॥ सर्वार्थास्तस्य सिध्यंति धनधान्यादिसंयु
ताः ॥३०॥ विजयी सर्वलोकेषु पुत्रपौत्रसमन्वितः ॥ ऋषिः स्वतंत्रः सततमायु-
रारोग्यमेव च ॥३१॥ श्वेतांशुकं तंडुलांश्च वंशपात्रान्वितं तथा ॥ मुक्ताफलं च क
र्पूरं कांस्यपात्रं च शर्करा ॥३२॥ षण्मासं पूजयेत्सोमं तथा च वत्सरावधि ॥ ब्राह्म
णान्भोजयेद्भक्त्या दंपतीं परिदापयेत् ॥३३॥ घृतं रौप्यं च वृषभं पूगानि च घट
स्तथा ॥ सौवर्णी दक्षिणा देया वित्तशाठ्यं विवर्जयेत् ॥ ३४॥ दैवज्ञं शाश्वतं यज्ञ

क्रियासुनिपुणंद्विजम्॥सुवर्णेनचवस्त्रेणनानाभोगैःसमर्च्चयेत्॥३५॥एवं
संपूज्यदेवेशंप्रार्थयेच्छशलांछनम्॥पीडानाशकरंदेवत्वामहंशरणंगतः॥३६
रोहिणीशसुधामूर्त्तेसुधाभावसुधाशन॥विषमस्थानसंभूतांपीडांनाशय
मेविधो॥३७॥ ॥इतिश्रीस्कंदपुराणेउमामहेश्वरसंवादेचंद्रपूजाविधिः॥ ॥
॥अथभिन्नपूजाविधिः॥ ॥द्विजराजगुरुश्रेष्ठताराधीशात्रिनंदन॥औषधी
नांचराजानंसोममावाहयाम्यहम्॥१॥अहोचंद्रजगत्प्राणयमुनाविषयोद्भव
॥वरप्रदगदापाणेश्वेतवर्णात्रिगोत्रज॥२॥दशाश्ववाहनागच्छउमारूपसम
न्वित॥तद्रूलेदेवमंत्रेणमंत्रेणत्र्यग्निनार्चितः॥३॥रोहिणीशःसुधामूर्तिःसुधा
गात्रःसुधाशनः॥विषमस्थानसंभूतांपीडांदहतुमेविधुः॥४॥ग्रहाराज्यंप्रय-
च्छंतिग्रहाराज्यंहरंतिच॥ग्रहैस्त्वव्यापितंसर्वंत्रैलोक्यंसचराचरम्॥५॥ ॥
॥इतिश्रीस्कंदपुराणेउमामहेश्वरसंवादेचंद्रस्तोत्रंसमाप्तम्॥ ॥अथभौम

स्तोत्रपाठोलिख्यते॥ ॥युधिष्ठिरउवाच॥ ॥कथयस्वप्रसादेनकृष्णभ्रंव्रतमु-
त्तमम्॥पुत्रदंसर्वरोगघ्नंसर्वकामफलप्रदम्॥१॥ ॥श्रीकृष्णउवाच॥ ॥शृ
णुराजन्प्रयत्नेनसर्वकामफलप्रदम्॥सर्वरोगहरंपुण्यंपुत्रपौत्रविवर्धनम्॥
॥२॥मंगलस्यव्रतंसार्थंप्रत्यक्षफलदंनृणाम्॥गौतमेनपुरापृष्टोलोहितांगोम
हाग्रहः॥३॥कथयस्वप्रसादेनव्रतंपूजार्चनंस्वकम्॥मंत्रमाराधनंजाप्यंदानं
यद्भुवनत्रये॥४॥ ॥मंगलउ०॥शृणुगौतमयत्नेनमद्व्रतस्यविधिंशुभम्॥
मंत्रमाराधनंदानंपवित्रंसर्वदेहिनाम्॥५॥स्नात्वानद्यांतडागेवाप्रत्यूषेभौ
मवासरे॥संतर्प्यपितृदेवांश्चरक्तांबरधरःशुचिः॥६॥सुसमेभूप्रदेशेचगो
मयेनोपलेपिते॥आधायशुद्धकलशंत्रिकोणेमंडलेसमम्॥७॥तत्रसंस्थाप
येद्भौमंशूलशक्तिगदाधरम्॥वरदंमेषमारूढंरक्तचंदननिर्मितम्॥८॥पूजा
तत्रप्रकर्त्तव्यारक्तपुष्पैःसुभक्तितः॥ ॥मंगलायनमः१भूमिपुत्रायनमः॥

॥३॥ऋणहर्त्रेनमः ३ धनप्रदायनमः॥४॥स्थिरासनाय०॥५॥महाकायायनमः
॥६॥सर्वकामविरोधकाय०॥७॥लोहितायनमः॥८॥लोहितांगाय०॥९॥सामगा
नकृपाकराय०॥१०॥धरात्मजायनमः॥११॥कुजायन०॥१२॥रक्ताय०॥१३॥भूमिदा
यनमः॥१४॥भूमिनंदनाय०॥१५॥अंगारकायनमः॥१६॥यमाय०॥१७॥सर्वरोग
प्रहारिणेन०॥१८॥सृष्टिकर्त्रेनमः॥१९॥प्रहर्त्रेन०॥२०॥सर्वकामफलप्रदाय०॥२१
॥अग्निर्मूर्द्धाइतिमंत्रेणपूजा॥उज्जयिन्यांसमुत्पन्नभोभोभौमचतुर्भुज॥भार
द्वाजकुलेजातशूलशक्तिगदाधर॥१०॥मेषमारूढवरदस्कंधप्रायातिविक्रम॥प्र
सीददेवदेवेशविघ्नहारिन्धरात्मज॥११॥गृहाणार्घ्यंमयादत्तंममशांतिप्रदोभ
व॥अथमंत्रः॥धरणीगर्भसंभूतंविद्युत्कांतिसमप्रभम्॥कुमारंशक्तिहस्तं
चमंगलंप्रणमाम्यहम्॥१३॥इतिनमस्कारमंत्रः॥मंगलोभूमिपुत्रस्तुऋण
हर्त्ताधनप्रदः॥स्थिरात्मजोमहाकायःसर्वकामविरोधकृत्॥१४॥लोहितो-

लोहितांगश्चसामगानकृपाकरः॥धरात्मजःकुजोरक्तोभूमिदोभूमिनंदनः॥
॥१५॥अंगारकोयमश्चैवसर्वरोगप्रहारकः॥सृष्टिकर्त्ताप्रहर्त्ताचसर्वकामफल
प्रदः॥१६॥एतानिकुजनामानिप्रातरुत्थाययःपठेत्॥ऋणंनजायतेतस्यध-
नमाप्नोत्यसंशयः॥१७॥ऋणरेखाप्रकर्तव्यांगारकस्यतथाग्रतः॥तांचप्रमार्ज
येद्यस्तुवामपादेनभावुकः॥१८॥ऋणंनजायतेतस्यऋणहर्त्ताधनीभवेत्॥
पूजितोयेनदेवेशोमंगलोमंगलप्रदः॥१९॥उत्पाताविलयंयांतिग्रहपीडाश्च
दारुणाः॥नभयंविद्यतेतस्यसदाभौमप्रसादतः॥२०॥आसीत्पूर्वंसुनंदाख्यो
ब्राह्मणोवेदपारगः॥तस्यभार्यासुनंदाचवंध्याचबहुशोभना॥२१॥तस्याः
सूनुर्नसंजातोवंध्यत्वाद्विधियोगतः॥तेनामुष्याःसुताजातागृहीत्वाचैवपो
षिताः॥२२॥ब्राह्मणस्यकुलेजातासुशीलारूपसंयुताः॥सर्वलक्षणसंपूर्णा
विधिनातेनगौतमः॥२३॥तयाचपूर्वजननेपूजितोभक्तियोगतः॥साचपुत्री-

 गृहेतस्यब्राह्मणोपरिपालयत्॥२४॥सदासुवर्णपुष्पाणितदंगेभ्यःपतंतिवै॥ 
 विप्रस्तेनसुवर्णेनबलाढ्योधनगर्वितः॥२५॥कोटिकोटीश्वरोजातोराजतेभूमि
मंडले॥वर्षैःकतिपयैरेवसाकन्यायौवनेस्थिता॥२६॥दृष्टानंदिकविप्रेणदश
वर्षामनस्विनी॥तेनविप्रेणविप्रस्यसदासोमज्वरस्यच॥२७॥दत्ताब्राह्मण
धर्मेणसाकन्याद्विजसत्तमः॥वेदोक्तविधिनाकृत्वाविवाहंशुभवासरे॥२८॥
स्वदेशंप्रतिभूयोपिसभार्योगंतुमुद्यतः॥नंदाचप्रेरयामासत्तंविप्रंलोभभाव-
तः॥२९॥तेनासौनिहतोविप्रश्चोररूपेणसत्वरम्॥मृतंतंशयनेदृष्ट्वासाना
रीशोककर्शिता॥३०॥पीडितासाभवत्काष्ठमध्यस्यज्वलितेनच॥हुताशने-
नविप्रस्त्रीमरणायप्रकल्पते॥३१॥आत्मानंसंकटेस्मृत्वामांस्मरंतीपदेपदे
॥चितांप्रदक्षिणीकृत्यचितायास्तुसमीपतः॥३२॥तस्मिन्कालेत्वहंतुष्टो- 
याचस्वमनसीप्सितम्॥अजरोत्वमरोविप्रोमेपतिश्चभवत्विति॥३३॥तदाब्र

वीन्महासाध्वीवरंत्रिभुवनोत्तमम्॥ ॥ब्राह्मण्युवाच॥ ॥यदितुष्टोसिदेवेश
ग्रहाणामधिपप्रभो॥३४॥येस्मरंतिधरांनित्यंरक्तचंदनचर्च्चितम्॥रक्तपुष्पै
श्चसंपूज्यप्रत्यूषेभौमवासरे॥३५॥वंध्यत्वंचऋणंतेषांव्याधिराजभयंतथा॥
भयंसर्पाग्निशत्रुभ्यःकुरुमाभूमिनंदन॥३६॥ ॥मंगलउवाच॥ ॥एकविंश
तिभौमाश्चमद्भक्ताश्चजितेंद्रियाः॥एकाहारेणशांताश्चनदीतीरेगृहेयवा॥३७
॥आद्येस्तुसकलैर्मंत्रैर्वेदपौराणिकैस्तथा॥दद्याद्रक्तमनड्वाहंसर्वोपस्करसं-
युतम्॥३८॥ स्वशक्त्याभोजनंविप्रदातव्यंचहिरण्यकम्॥तेषांपीडाकदाप्यस्य
ग्रहस्यनभविष्यति॥३९॥भूतवेतालशाकिन्यःप्रभवंतिनहिंसकाः॥एवमस्तु
तदातेषामित्युक्त्वाचदिवंययौ॥४०॥इदंव्रतंचयोलोकेकरोतिभुवनत्रये॥आप
दोविलयंयांतिसकलंतस्यवर्धते॥४१॥यःशृणोतिव्रतमिदंशुचिर्भूत्वाजितें
द्रियः॥तस्यमासकृतंपापंविलयंयातितत्क्षणात्॥४२॥सदाविनयमारूढः

म· प्रकृत्यासक्तसमाहितः॥यावज्जीवव्रतमिदंकरोतिभुवनत्रये॥५३॥समृद्धोभुव स्तो·
१८ नेविप्रपुत्रपौत्रधनेनच॥अंतेचपरमंस्थानंयत्रसूर्योदयोग्रहाः॥५४॥सौभाग्यं
चसुखंतस्यजन्मजन्मसुखायवै॥दारिद्र्यदुःखनाशश्चभौमदेवप्रसादतः॥५५
॥ ॥इतिश्रीस्कंदपुराणेमंगलव्रतंसमाप्तम्॥ ॥भूमिपुत्रोमहातेजाःस्वे
दोद्भवपिनाकिनः॥श्रेयोर्थीत्वांप्रपन्नोऽहंगृहाणार्घ्यंनमोस्तुते॥१॥प्रसीददे
वदेवेशविघ्नहारिन्धरात्मज॥गृहाणार्घ्यंमयादत्तंममशांतिप्रदोभव॥२॥ध
रणीगर्भसंभूतंविद्युत्कांतिसमप्रभम्॥कुमारंशक्तिहस्तंचमंगलंप्रणमा
म्यहम्॥३॥पूगानिनागपत्राणिकर्पूरसहितानिच॥मयानीतानिदेवेशतांबू
लंप्रतिगृह्यताम्॥४॥वृत्तमग्निंचषट्कोणेलिखेदादित्यकेदले॥तारसंपु
टितंमंत्रंमातृकादिक्रमंन्यसेत्॥५॥मंगलंदिव्यमग्नौतुषट्कोणेतुधनप्रद १८
म्॥सामगादित्यकेचैवदलेक्रमगतोन्यसेत्॥६॥पाशांकुशासमायुक्तंमा-

याबीजसमन्वितम् ॥ लिखेत्सर्वेषुकोणेषुगुरुचंदनपूर्वकम् ॥ ७ ॥ भूर्जपत्रे
तथाभूमौफलकेनसमाहितम् ॥ चंदनागरुकस्तूरीकर्पूरंरक्तचंदनम् ॥ ८ ॥
कुंकुमाद्यैर्लिखेद्विद्वान्गोरोचनसमन्वितम् ॥ मंत्रैर्मंत्राधिकोभूत्वाकारये
द्विधितःसुधीः ॥ ९ ॥ सर्वसिद्धिकमंत्रंचमनुष्याणांकलौयुगे ॥ रक्तमाल्यांब
रधरःशक्तिशूलगदाधरः ॥ १० ॥ चतुर्भुजोमंदगामीमेषगःस्याद्धरात्मजः ॥ ॥
॥ ध्यानमंत्रः ॥ मंगलोभूमिपुत्रइत्येवपठित्वाध्यानम् ॥ आचमनम् ॥ इदंवस्त्रं
मयाभौमलोकलज्जानिवारकम् ॥ मयोपपादितंतुभ्यंगृहाणेदंनमोस्तुते ॥ ११ ॥
॥ इतिवस्त्रमंत्रः ॥ ब्रह्मसूत्रमिदंदेवब्रह्मणायच्चनिर्मितम् ॥ उपवीतंमयाद-
त्तंगृहाणभूमिनंदन ॥ १२ ॥ उपवीतमंत्रः ॥ ॥ इतिमंगलपाठपूजनंस
माप्तम् ॥ ॥ भौमयंत्रम् ॥ ॥ त्रिकोणंपूर्वमुद्धृत्यपंचधाविभजेत्त
तः ॥ तृतीयरेखाचिन्हाभ्यांलांछयेत्समभागतः ॥ १ ॥ आद्यरेखाग्रयुगलं

म. तृतीयाचिन्हयोर्न्यसेत् ॥ द्वितीयाग्रं समाक्रम्यतृतीयाचिन्हयोर्न्यसेत् ॥ स्तो.
१९ ॥२॥ पुनारेषांतृतीयांतुसमांभज्य समांशकः ॥ तुर्याचिन्हद्वयेनाथ-
त्रिभिश्चिन्हैस्तुपंचभिः ॥३॥ तृतीयाग्रंसमाक्रम्यपंचम्यांम
ध्यचिन्हगे ॥ तुरीयाग्रंसमा क्रम्यपंचम्याश्चिन्हयोर्द्वयोः
॥४॥ अयमानद्वयेदद्या त्सूर्ययुग्मंविचक्षणः ॥
अयमेवाधिकाःसम्य कूकोणानामेवविंश-
तिः ॥५॥ अथभौम वास्त्रतम् ॥ तत्र
यंत्रप्रकारः ॥ उक्तःसंग्रहे ॥
त्रिकोणंपूर्व मुल्लिख्यचतुर्धा
विभजेत्त तः ॥ तृती १९
यरेखा चिन्हा



म्यांलांछयेत्समभागतः॥१॥आद्यरेखाग्रयुगलंतृतीयाचिन्हयोर्न्यसेत्॥द्विती याग्रंसमाकृष्यतृतीयाचिन्हयोर्न्यसेत्॥२॥युतारेषातृतीयातुसमांमज्यात्स- मांशतः॥तुर्यांचिन्हद्वयेनाथत्रिभिश्चिन्हैस्तुपंचभिः॥३॥तृतीयाग्रेप्रकुर्वीतप ञ्चम्यामध्यचिन्हगे॥तुर्याग्रेयोजयेत्सम्यक्पंचम्यांचिन्हयोर्द्वयोः॥४॥अथमा नद्वयेदद्यात्सूत्रयुग्मंविचक्षणः॥एवमेकाधिकासम्यक्कोणानांविंशतिर्भवेत् ॥५॥तृतीयतुर्ययोर्मध्येस्थितिचिन्हेगृहेर्चयेत्॥देवंतदग्रतांमंत्रीकोणेदक्षिण तःक्रमात्॥६॥मंगलाद्योंकारपूर्वान्नमोंतानेकविंशतिः॥कोष्ठेषुनाममंत्रान् लिखेत्॥ततःपूजाप्रकर्त्तव्याधुत्रसंपत्तिहेतवे॥पूजाप्रकारमाह॥एहिमेभग वन्भौमअंगारकमहाप्रभो॥त्वयिसर्वंसमायातंत्रैलोक्यंसचराचरम्॥७॥भौ ममावाहयिष्यामितेजोमूर्त्तिंदुरासदम्॥रुद्ररूपमनिर्देश्यंवक्रंचरुधिरप्रिय म्॥८॥अग्निमूर्द्धेतिमंत्रेणगायत्र्यामंगलस्यवा॥गायत्रीमंत्रः॥अंगारका

यविद्महेशक्तिहस्तायधीमहि॥तन्नोभौमःप्रचोदयात्॥अथपूजाविधिःमंत्र
महोदधौ॥ ॥मार्गशीर्षेवैशाखेवाशुक्लपक्षेभौमवासरे अरुणोदयकालेअ
पामार्गकाष्ठेनदंतान्धाव्यनद्यादौस्नात्वारक्तवस्त्रंपरिधायरक्तोत्तरीयंचधृत्वा
मासपक्षाद्युल्लिख्यऋणच्छेदायपुत्रावाप्त्यर्थंभौमव्रतंकरिष्येइतिसंकल्प्य-
प्रार्थयेत्॥ ॥अथदेवेशतेभक्त्याकरिष्येव्रतमुत्तमम्॥ऋणव्याधिविनाशा
यधनसंतानहेतवे॥१॥ इति॥ ततःकर्त्तास्वदेहेन्यासान्कुर्यात्॥ अथ॥ अंघ्र्यो
मंगलायनमः॥जान्वोर्भूमिपुत्रायनमः॥ऊर्वोऋणहर्त्रे०॥ कटिदेशेधनप्रदा
य०॥गुह्येस्थिरासनायनमः॥उरसिमहाकायाय०॥ वामबाहौसर्वकामविरो-
धकाय०॥दक्षिणबाहौलोहिताय०॥ गलेलोहिताक्षायनमः॥ मुखेसामगानकृ
पाकराय०॥नासिकायांधरात्मजाय०॥ अक्ष्णोःकुजाय०॥ललाटेभौमाय०॥ २०
भ्रुवोर्मध्येभूतिदाय०॥ शिरसिभूमिनंदनाय०॥ शिखायांअंगारकाय०॥स

र्वांगेयंमायनमः॥ यमायकवचायहुम्॥ सर्वरोगापहारकाय अस्त्रायफट्॥ सृ-
ष्टिकर्त्रेमूर्धादिपादपर्यंतं॥सर्वकामफलप्रदाय०॥ सर्वांगे॥बाहुहृदयेसर्वरोगापहा
रकाय०॥ मूर्धादिपादपर्यंतंसृष्टिकर्त्रेनमः॥ चरणमस्तकावधिसृष्टिहर्त्रे०॥ दिक्ष
अंत्यायनमः॥ नाभौ आरायन०॥वक्षसिवक्रायन०॥मूर्ध्निभूमिजाय०॥इतिन्या
सान्कृत्वात्हृदयादिन्यासंकुर्यात्॥ओंह्रांत्हृदयायनमः॥ ओंह्रींशिरसेस्वाहा॥
ॐह्रूंशिखायैवषट्॥ओंह्रैंह्रैंह्रैंकवचायहुम्॥ ओंह्रंसःनेत्रत्रयायवौषट्॥
ओंरवंरवःअस्त्रायफट्॥करन्यासः॥ओंकनिकाभ्यांनमः॥ओंह्रंअनामिका-
भ्यां०॥ओंह्रूंमध्यमाभ्यांनमः॥ओंह्रंह्रंह्रूंतर्जनीभ्यां०॥ओंह्रंसः अंगुष्ठाभ्यां०॥
ओंरवंरवःकरतलकरपृष्ठाभ्यांनमः॥इतिन्यासान्कृत्वाआवाहयेत्॥रक्तमाल्यां
बरधरशक्तिशूलगदाधर॥चतुर्भुजोमेषगमोवरदःस्याद्धरासुतः॥इतिध्यान
म्॥एह्येहिभगवन्ब्रह्मन् अंगारकमहाप्रभो॥त्वयिसर्वंसमायातंत्रैलोक्यंस

म॰ चराचरम् ॥ भौममावाहयिष्यामितेजोमूर्त्तिंदुरासदम् ॥ क्रूररूपमनिर्देश्यंव- स्तो॰
२१ क्त्ररुधिरप्रियमिति॥ ततोअग्निर्मूर्धेतिमंत्रेणपूर्वोक्तभौमगायत्र्यावा आसना
दिपुष्पांतांपूजांकृत्वा॥ ऋणरेखाप्रकर्त्तव्या अंगारेणतदग्रतः॥ तिस्रस्तुमा-
र्जयेत्सम्यग्वामपादतलेनतु॥ अंगपूजनम्॥ ओंभौमायहृदयायनमः॥ ओंह्रीं
भौमाय॰॥ ओंशिरसेस्वाहा॥ ओंह्रंभौमाय॥ शिखायैवषट्॥ ओंहंसः भौमा-
य॰॥ कवचायहुम्॥ ओंखंभौमाय॰॥ नेत्रत्रयायवौषट्॥ ओंखः भौमा॰॥ शि
खायैवषट्॥ ओंहंसः भौमाय॰॥ अस्त्रायफट्॥ यंत्रस्थैकविंशतिनामभिः य-
था॥ मंगलायनमः पादौपूजयामि॥ भूमिपुत्रायन॰॥ जानुनीपूज॰ ऋणहर्त्रे॰॥
ऊरूपू॰॥ धनप्रदाय॰॥ कटीपू॰॥ स्थिरासनाय॰॥ गुह्यंपूजया॰॥ महाकायाय॰
॥ उरःपू॰॥ सर्वकामविरोधकाय॰॥ वामबाहुंपू॰॥ लोहिताय॰॥ द॰ बाहुंपू॰॥ लो २१
हिताक्षाय॰॥ कंठंपूज॰॥ सामगानकृपाकराय॰॥ मुखंपू॰॥ धरात्मजाय॰॥ ना-

सिकां पूजयामि ॥ सर्वरोगापहारकाय० ॥ नेत्रद्वयं पूजया० ॥ वृष्टिकर्त्रे नमः ॥ मूर्धा
दिपादपर्यंतं पूज० ॥ वृष्ट्यपहर्त्रे० ॥ चरणादिमस्तकपर्यंतं पू० ॥ सर्वकामफल
प्रदाय० ॥ दिशः पू० ॥ ब्राह्म्यादिमातृकाः पू० ॥ दिक्पालाः पूज० ॥ आयुधं पू० ॥ अत्र
मूलमंत्रमानं अन्यत्र क्वचिदन्यथा ॥ शिखायां मंगलः पातु भूमिपुत्रश्च मूर्धनि ॥
ललाटे ऋणहर्त्ता च चक्षुषोश्च धनप्रदः ॥ स्थिरासनः श्रोत्रयोश्च महाकायश्च
नासिके ॥ आस्यदंतोष्ठजिह्वासु सर्वकामविरोधकः ॥ हनुं मे लोहितः पातु लो-
हिताक्षश्च कंठके ॥ स्कंधयोरुभयोरक्षेत्सामगानां कृपाकरः ॥ धरात्मजो भुजौ पा
तु कुजो रक्षेत्करद्वयम् ॥ भौमो मे त्हृदयं पातु भूतिदस्तु तथोदरम् ॥ भूमेश्च नंदनो
नाभौ गुह्ये त्वंगारकं न्यसेत् ॥ ऊरू ममयमो रक्षेज्जान्वोरोगापहारकः ॥ जंघयो
र्वृष्टिकर्त्ता च अपहर्त्ता च गुल्फयोः ॥ पादांगुष्ठे च पादौ च सर्वकामफलप्रदः ॥ श-
क्तिर्मे पूर्वतो रक्षेच्छूलं रक्षेच्च दक्षिणे ॥ पश्चिमे मां धनुः पातु उत्तरे च शरस्तथा ॥

मं॰ उर्ध्वंषडाननःपातुअधस्तात्पृथिवीमम॥एवंन्यस्तशरीरोसोचिंतयेद्भूमिनंद स्तो॰
२२ नम्॥ ॥इतिमंगलपूजासमाप्ता॥ ॥अथमंगलस्तोत्रंलिख्यते॥ ॥मंग
लोभूमिपुत्रश्चऋणहर्त्ताधनप्रदः॥स्थिरासनोमहाकायःसर्वकामविरोधकः
॥१॥लोहितोलोहिताक्षश्चसामगानांकृपाकरः॥धरात्मजःकुजोभौमोभूति-
दोभूमिनंदनः॥२॥अंगारकोयमश्चैवसर्वरोगापहारकः॥वृष्टिकर्त्तापहर्त्ता
चसर्वकामफलप्रदः॥३॥एतानिकुजनामानिनित्यंयःश्रद्धयापठेत्॥ऋणं
नजायतेतस्यधनंशीघ्रमवाप्नुयात्॥४॥धरणीगर्भसंभूतंविद्युत्कांतिसम
प्रभम्॥कुमारंशक्तिहस्तंचमंगलंप्रणमाम्यहम्॥५॥स्तोत्रमंगारकस्यैतत्पठ
नीयंसदानृभिः॥नतेषांभौमजापीडास्वल्पापिभवतिक्वचित्॥६॥अंगार
कमहाभागभगवन्भक्तवत्सल॥त्वांनमामिममाशेषमृणमाशुविमोचय॥ २२
॥७॥ऋणरोगादिदारिद्र्यंयेचान्येचापमृत्यवः॥भयक्लेशमनस्तापानश्यं-

तुममसर्वदा ॥८॥ अतिवक्रदुराराध्यभोगमुक्तजितात्मनः॥तुष्टोददासिसाम्रा
ज्यंरुष्टोहरसितत्क्षणात् ॥९॥ विरिंचिशक्रविष्णूनांमनुष्याणांतुकाकथा॥तेनत्वं
सर्वसत्वेनग्रहराजोमहाबलः॥१०॥पुत्रान्देहिधनंदेहित्वामस्मिशरणंगतः॥ऋ
णदारिद्र्यदुःखेनशत्रूणांचभयात्ततः॥११॥एभिर्द्वादशभिःश्लोकैर्यस्तुवेत्तुध
रासुतम्॥महतींश्रियमाप्नोतिह्यपरोधनदोयुवा॥१२॥ ॥इतिश्रीस्कंदपुरा-
णेभार्गवप्रोक्तंसंपूर्णमिदंमंगलस्तोत्रम्॥ ॥अथबुधस्तोत्रंलिख्यते॥बुधा
यनमः॥शशांकसुतदेवेशबुधादिप्रभवेनमः॥यजमानहितार्थायबुधमावाहया
म्यहम्॥१॥अहोचंद्रसुतःश्रीमान्मागधायांसमुद्भवः॥अत्रिगोत्रश्चतुर्बाहुःख-
ड्गखेटकधारकः॥२॥ गदाधरःसिंहबाहुःस्वर्णाभःसनातनः॥कृष्णप्रदीप-
श्चात्रेय अयंविष्णुस्वपूजितः॥३॥ शुचौदेशेसमासीनःसर्वतःसिद्धिमान्बुधः॥
सिंदूरेणप्रकर्त्तव्यंसमंत्रेश्चमनोहरम्॥४॥मध्येतुकलशंस्थाप्यपूरयेत्तीर्थवारि

णा॥हेमगर्भस्ततःकृत्वानवरत्नसमन्वितः॥५॥पूजयेन्मधुनादेवंसर्वकार्यार्थ-
सिद्धये॥वस्त्रेणान्नेनसंपत्त्यापूजयेत्परमेश्वरम्॥६॥पूजांसमापयेत्कुंभेपंचपं
चामृतैस्तथा॥अभिषिच्यततःशीघ्रंदीक्षाकर्णसमुत्सवेत्॥७॥पूजयेद्गंधपुष्पै-
श्चधूपदीपयुतैःसदा॥एकविंशतिकोणेषुत्रिकोणंरक्तमंडलम्॥८॥रक्तैःसुगंधैः
पुष्पैश्चकमलैश्चापरैःप्रभो॥मंत्रयुक्तैर्धृतैर्देवपुरश्चरणसिद्धये॥९॥गुरवेविधि
नाश्वेष्टांसालंकारांपयस्विनीम्॥अरुणांवस्त्रसहितांधेनुंदद्याद्विशेषतः॥१०॥
॥अथातःसंप्रवक्ष्यामिरहस्यंत्वेतदुत्तमम्॥येनलक्ष्मीर्धृतिःपुष्टिस्तुष्टिःकांतिःप्र
जायते॥११॥विशाखासुबुधंगृत्यज्ञानेनतुसमर्चयेत्॥बुधंहेममयंकृत्वास्थाप
येत्कांस्यभाजने॥१२॥शुक्लवस्त्रयुगच्छन्नंशुक्लमाल्यानुलेपनम्॥गुडोदनोप-
हारंचब्राह्मणायनिवेदयेत्॥१३॥बुधत्वंविबुधानन्यान्बोधवान्सर्वदानृणा
म्॥तत्त्वावबोधंकुरुमेसोमपुत्रनमोनमः॥१४॥होमंघृततिलैःकुर्यात्बुधना

न्मान्त्रमंत्रवित्॥समिधाष्टोत्तरशतमष्टाविंशतिरेववा॥१५॥होतव्यामधुसर्पि-
र्भ्यांदध्नाचैवघृतेनच॥विशेषणसमिद्भिश्चहुत्वैवाष्टोत्तरंशतम्॥१६॥बुधशां
तिरियंप्रोक्ताग्रहोमंकुर्यात्तथार्चनम्॥बुधदोषविनाशेचशांतिःसर्वत्रकारणम्
॥१७॥बुधस्तुष्टिप्रकर्त्ताचतथाशांतिकपौष्टिके॥बुधसौख्यकरश्चैवआयुरारो
ग्यसंपदः॥१८॥जायतेस्तोत्रपाठेनसर्वसौख्यफलंनृणाम्॥चंद्रस्यनयनंशां
तंमहायोगेनसंयुतम्॥१९॥सिद्धिदःसर्वदातस्ययःकुर्यात्पूजनंनरः॥तस्यशां
तिकरोनित्यंजायतेसर्वदाबुधः॥२०॥नित्यंशांतिकरश्चैवबुधोबुद्धिसमन्वितः
॥प्रज्ञासौख्यकरश्चैवनितरामृद्धिदायकः॥२१॥जन्मेबुधेविशेषेणपूजाकार्या
प्रयत्नतः॥द्वादशेपंचमेचैवनवमेचविशेषतः॥२२॥ तृतीयश्चसुनिस्यश्चग्रहा
निकर्त्ताबुधःस्मृतः॥ तदापाठःप्रकर्त्तव्यःशांत्यर्थंचजनस्यच॥२३॥बुधवारे
विशेषेणमुद्गान्नेनन्नसंयुतम्॥नीलरत्नंप्रदातव्यंदक्षिणासहितंद्विजे॥

॥२४॥नीलवस्त्रयुगन्दद्यन्मंत्रंशपात्रंविशेषतः॥सर्वान्कामानवाप्नोतिनात्र कार्याविचारणा॥२५॥ ॥इतिश्रीभविष्योत्तरपुराणेबुधपूजाविधिः॥ ॥
प्रियंगुकलिकाश्यामंरूपेणाप्रतिमंबुधम्॥सौम्यंसौम्यगुणोपेतंतंबुधंप्रणमाम्यहम्॥२६॥उत्पातरूपीजगतांचंद्रपुत्रोमहाद्युतिः॥सूर्यप्रियकरोविद्वान्पीडांहरतुमेबुधः॥२७॥शिरीषपुष्पसंकाशःकपिशीलोयवापुनः॥सोमपुत्रोबुधश्चैवसदाशांतिंप्रयच्छतु॥२८॥श्यामःशिरालश्चकलाविधिज्ञःकौतूहलीकोमलवाग्विलासी॥रजोधिकोमध्यमरूपदृक्स्यादाताम्रनेत्रोद्विजराजपुत्रः॥२९॥बुधंबुद्धिप्रदातारंसूर्यरश्मिसमन्वितम्॥यजमानहितार्थायबुधमावाहयाम्यहम्॥३०॥अहोचंद्रसुतःश्रीमान्मागधायांसमुद्भवः॥अत्रिगोत्रश्चतुर्बाहुःखड्गखेटकधारकः॥३१॥गदाधरनृसिंहस्थःस्वर्णनाभःशमान्वितः कृष्णवृक्षस्यपत्रंचइंद्रविष्णुप्रपूजितः॥३२॥ज्ञेयोबुधःपंडितश्चरोहिणेय-

श्चसोमत्तः॥कुमारोराजपुत्रश्चशैशवःशाशिनंदनः॥३३॥गुरुपुत्रश्चतारेयो
विबुधोबोधनस्तथा॥सौम्यःसर्वगुणोपेतोरत्नदानफलप्रदः॥३४॥एतानिबु
धनामानिप्रातःकालेपठेन्नरः॥बुद्धिर्विवृद्धितांयातिबुधपीडानजायते॥३५॥
॥इतिबुधस्तोत्रंसंपूर्णम्॥ ॥अथगुरुस्तोत्रंलिख्यते॥ ॥शक्रादिदेवैः
परिपूजितोसित्वंजीवभूतोजगतोहिताय॥ददातियोनिर्मलशास्त्रबुद्धिंसवा
क्पतिर्विदधतुमेसलक्ष्मीम्॥१॥सकलसुरविनेताब्रह्मतुल्यप्रभावस्त्रिद-
शपतिकिरीटैर्घृष्टपादारविंदः॥विमलमतिविकासीसर्वमांगल्यहेतुर्ददतुमम
विभूतिंवाक्पतिःसुप्रभावः॥२॥द्वितीयःपंचमःसप्तएवमेकादशोगुरुः॥अ
न्नंविविधभोगांश्चरत्नानिकुरुतेगुरुः॥३॥द्वादशदशमश्चतुर्थेजन्मनिषष्ठा
ष्टमेतृतीयेच॥व्याधिर्विदेशगमनंमित्रविरोधंसुरगुरुःकुरुते॥४॥देवा
नांचऋषीणांचगुरुंकांचनसन्निभम्॥बुद्धिभूतंत्रिलोकेशंतंनमामिबृह-

स्पतिम्॥५॥बृहस्पतिमहंनौमिगुरुंदेवेंद्रपूजितम्॥सर्वशास्त्रप्रवक्तारंसर्व-
कामफलप्रदम्॥६॥सर्वसंशयच्छेत्तारंवेत्तारंसर्वकर्मणाम्॥परब्रह्ममयं-
नित्यंपरमानंदरूपिणम्॥७॥सर्वसिद्धिप्रदंदेवंशरण्यभक्तवत्सलम्॥वरे
ण्यंवरदंशांतंत्रिदशार्त्तिहरंपरम्॥८॥लंबकूर्चंस्कवर्णाभंस्वर्णयज्ञोपवीतिन
म्॥पीतवस्त्रपरीधानंमार्त्तंडतिलकान्वितम्॥९॥चंदनागरुकर्पूरैः सुगंधैः
शतपत्रकैः॥संपूज्यध्यायतेयैस्तुभक्त्यासुदृढयानरैः॥१०॥धनधान्यंजयं
सौख्यंसौभाग्यंनृपमान्यता॥भवंतिसर्वदातेषांत्वत्प्रसादात्सुरेश्वर॥११॥
रोगाग्निसर्पचौराद्यास्तेषांनप्रभवंतिहि॥स्वस्थानस्थोधिदेवेशोध्यानसर्वा
र्थसाधकः॥१२॥प्रभुपंडितराजेनएतत्कृत्वातुचेतसी॥मनुष्याणांहितार्थाय
गुरुनामानिसोवदत्॥१३॥विषमस्थस्तथानृणांसर्वकष्टप्रभंजनः॥प्रत्यहं-
पठतेयोवैतस्यकामफलप्रदः॥१४॥नमःसुरेंद्रवंद्यायदेवाचार्यायतेनमः॥

नमस्तेऽनंतसामर्थ्यवेदसिद्धांतपारग॥१५॥ सदानंदनमस्तेस्तुनमःपीडाक
रायच॥ नमोवाचस्पतेतुभ्यंनमस्तेपीतवाससे॥१६॥ नमोऽद्वितीयरूपायलंब
कूर्चायतेनमः॥नमःप्रहृष्टनेत्रायविप्राणांपतयेनमः॥१७॥ नमोभार्गवशिष्या
यविपन्नहितकारक॥ नमस्तेसुरसैन्यायविपन्नत्राणहेतवे॥१८॥ विषमस्थस्त
थानृणांसर्वकष्टप्रणाशनः॥ प्रत्यहंतुपठेद्योवैतस्यकामफलप्रदः॥१९॥ बृहस्प
तिःसुराचार्योदयावान्शुभलक्षणः॥लोकत्रयगुरुःश्रीमान्सर्वज्ञःसर्वतोवि
भुः॥२०॥सर्वेशःसर्वदातुष्टःसर्वगःसर्वपूजितः॥अक्रोधनोमुनिश्रेष्ठोनीतिक-
र्ताजगत्पिता॥२१॥विश्वात्माविश्वकर्ताचविश्वयोनिरयोनिजः॥भूर्भुवोध-
नदाताचभर्ताजीवोमहाबलः॥२२॥ पंचविंशतिनामानिपुण्यानिशुभदानि
च॥प्रातरुत्थाययोनित्यंपठेद्वासुसमाहितः॥२३॥ विपरीतोपिभगवान्सुप्रीतः
स्यात्बृहस्पतिः॥नंदगोपालपुत्रेणविष्णुनाकीर्तितानिच॥२४॥बृहस्पतिः.

गु॰ काश्यपेयोदयावान्शुभलक्षणः॥अभीष्टफलदःश्रीमान्शुभग्रहनमोस्तुते॥ स्तो॰
२६ ॥२५॥बृहस्पतिःसुराचार्योदेवोसिसुरपूजितः॥आचार्योदानवारिश्चसुरमंत्री
पुरोहितः॥२६॥कालज्ञःकालरुद्रोचित्तगश्चप्रजापतिः॥विष्णुःकृष्णस्तथा-
सूक्ष्मोप्रतिदेवोज्ज्वलग्रहः॥२७॥उदयास्तेचमध्यान्हेपठेन्नित्यंसमाहितः॥पं
चविंशतिनामानियःपठेत्फलदानितु॥२८॥नबाधकाग्रहास्तस्यस्वयंदेवोपिर
क्षिता॥करोतिविपुलांशांतिंसर्वपापप्रमोचनं॥२९॥प्रभुःपंडितराजेंद्रस्तत्वज्ञ-
श्चसदाहितः॥मनुष्याणांहितार्थायगुरुस्तोत्रंचकारसः॥३०॥नमःसुरेंद्रवंद्या
यदेवाचार्यायतेनमः॥पूज्यायसर्वदेवानांत्रिदशाधिपतेनमः॥३१॥जीवोबृह
स्पतिःसूरिराचार्योगुरुरंगिराः॥वाचस्पतिर्देवमंत्रीशुभंकुर्यात्सदामम॥३२॥
यस्यत्वंकुपितोदेवग्रहराजमहाबलः॥राज्यंसमृद्धंसौख्यंचतस्यनश्यतितत्क्ष २६
णात्॥३३॥यःपठेत्प्रयतःस्तोत्रंतस्यत्वंदातुमिच्छसि॥पश्यतांदेवदैत्यानां-

विरुद्धस्य शुभं फलम्॥ सशैलसागरायां तु पृथिव्यां परमेश्वरः॥ देवासुरमनुष्या
णां विरुद्धोसि क्षयंकरः॥३५॥ त्वयि क्रुद्धे बलिर्वीरो राजा वेणिर्निपातितः॥ हतो-
भीष्मस्त्वयि क्रुद्धे राजा दुर्योधनो हतः॥३६॥ सुरासुरैः सुरेंद्रेण पूजितोसि सदा
नरैः॥ कमलैः शतपत्रैश्च पादपद्मं प्रयत्नतः॥३७॥ तेषां नानाविधं सौख्यं येषां
तुष्टोसि तत्क्षणात्॥ जगच्चराचरं पूजां विदधाति सदेवतु॥३८॥ य इदं शृणुया
न्नित्यं पठेद्वापि समाहितः॥ बृहस्पतिकृता पीडा तस्य न स्यात्कदाचन॥३९॥ यः
पुनः श्रद्धया भक्त्या शुचिः संश्च गुरोर्दिने॥ मंडले ष्टदले पूजां तन्मध्ये प्रतिमां गु
रोः॥४०॥ कारयित्वा तु संस्थाप्य शुभैः पंचामृतैर्मुहुः॥ पीतयज्ञोपवीतं च पी
तवस्त्रं प्रयत्नतः॥४१॥ कुंकुमाद्यैः समालिप्य पीतपुष्पैः प्रपूजयेत्॥ समर्प्य
दीपं सुशुभं दीपं दद्याद्विधानतः॥४२॥ नानापक्वान्ननैवेद्यं कल्पयित्वा विच
क्षणः॥ आरार्तिकं विधानेन कारयित्वा नमेत्सुधीः॥४३॥ त्रिधा प्रदक्षिणीकृ

स्यद्यादर्घ्यंशुभैःफलैः॥ कृतांजलिपुटोभूत्वास्तोत्रमेतदुदीरयेत्॥ ४४॥ भवे
च्चतस्यसुखदोमानदोधनदोगुरुः॥ जन्मांतरगतापीडानस्यनश्यतितत्क्षणा
त्॥ ४५॥ द्वितीयःपंचमस्थोपिसप्तमैकादशास्थितः॥ सर्वेषांप्राणिनामीशः
सौख्यदोदशमोभवेत्॥ ४६॥ नवमस्थानगेन्यैवमध्यस्थानगतेगुरौ॥ गुरोः
स्थानेष्वशेषेषुविरुद्धस्यशुभंफलम्॥ ४७॥ प्रभुपंडितराजेनग्रहराजप्रियंकर
म्॥ कृतंस्तोत्रंपवित्रंचलोकानांहितकारकम्॥ ४८॥ लिखितंकारयेद्यस्तुपुस्त
कंवापिपूजयेत्॥ यइदंपठतेनित्यंतस्यतुष्टोबृहस्पतिः॥ ४९॥ ॥ इतिश्री
प्रभुपंडितविरचितायांश्रीगुरुपूजायांपूजाविधानंसमाप्तम्॥ ॥ अथपू
जाप्रकारः॥ ॥ सुमुखश्चेत्यादि॥ अभिलषितमनोरथसिद्ध्यर्थंबृहस्प
तिपूजनमहंकरिष्ये॥ तथान्वन्यासपूर्वकंषोडशोपचारैःपूजनम्॥ अथ
नामपूजा॥ बृहस्पतयेनमः॥ आवाहनम्॥ अहोवाचस्पतेप्रीतःसंजातः

सिंधुमंडले॥ एत्यांगिरसगोत्रेयहयारूढश्चतुर्भुजः॥१॥ दंडाक्षसूत्रवरदः कमंड लुधरःप्रभुः॥गुरुमंत्रेणसंपूज्योविधिवदुत्तरेदले॥ २॥ बृहस्पतयेनमः॥सुराचार्यायनमः॥दयावतेनमः॥शुभलक्षणायनमः॥लोकत्रयगुरवेन०॥श्रीपतये०॥ सर्वज्ञायनमः॥सर्वविघ्ननिपतयेनमः॥सर्वेशाय०॥सर्वदातुष्टाय०॥सर्वगायन० सर्वपूजिताय०॥अक्रोधनाय०॥मुनिश्रेष्ठाय०॥नीतिकर्त्रे०॥जगत्प्रीताय०॥विश्वात्मने०॥विश्वकर्त्रे०॥विश्वयोनये०॥अयोनिजाय०॥भूर्भुवायनमः॥धनप्रदाय० ॥भर्त्रे०॥जीवायनमः॥महाबलाय०॥ इतिचंदनं अक्षता पुष्पं धूपं दीपं नैवेद्यं तांबूलं फलं दक्षिणा फलार्घ्य आरात्रिकं प्रदक्षिणा नमस्कार॥स्तुतिपाठः॥ ब्राह्मणपूजा॥शक्रादिदेवैः परिपूजितोसित्वंजीव भूतोजगतोहिताय॥ददातियोनिर्मलशास्त्रबुद्धिंसवाक्पतिर्मेवितनोतुलक्ष्मीम्॥१॥ इतिपूजा॥ अथातःसंप्रवक्ष्यामिरहस्यंत्वेतदुत्तमम्॥ येनलक्ष्मीर्धृतिः पुष्टिस्तुष्टिःकांतिश्चजा

गु॰ २८

यते १ गुरुंचैवानुराधासु पूजयेद्भक्तितोनरः॥ पूर्वोक्तविधिनायोगेसप्तमा-
सान्समाचरेत्॥२॥ हैमंहेममयेपात्रेस्थापयित्वाबृहस्पतिम्॥ पीतांबरयुग
च्छन्नंपीतयज्ञोपवीतिनम्॥३॥ पादुकोपानहच्छत्रंकमंडलुविभूषितम्॥
पूज्यस्तुपीतकुसुमैःकुंकुमेनचपूजयेत्॥४॥ धूपदीपादिभिर्दिव्यैःफलैश्चं-
दनतंडुलैः॥खंडखाद्योपहारैश्चगुरोरग्रेनिवेदयेत्॥५॥ धर्मशास्त्रार्थतत्व
ज्ञज्ञानविज्ञानपारग॥ विबुधार्त्तिहरानित्यंदेवाचार्यनमोस्तुते॥६॥ होमंघृत
तिलैःकुर्यात्गुरुनाम्नाचमंत्रवित्॥समिधाष्टोत्तरशतमष्टाविंशतिरेववा॥
॥७॥होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच॥पिप्पलाःसमिधोज्ञेयाःसर्वशा
स्त्रप्रमाणतः॥८॥इमंस्तवंमहापुण्यंसर्वपापहरंशिवम्॥तुष्टिपुष्टिकरंनृ
णांगुरुविकृतिनाशनम्॥९॥ विषमस्थेगुरौकार्यामहाशांतिरियंनृभिः॥१०॥
पीतंदुकूलमथकंबलकंचपीतंधान्यंसुपीतहरितालहरिद्रकांच॥सत्पुस्तकं

स्तो॰

२८

चकपपीतफलानिहेमपात्रस्थितंनतुबृहस्पतिदानमेतत्॥११॥ ॥इति-
श्रीभविष्योत्तरपुराणेबृहस्पतिपादःसमाप्तः॥ ॥श्रीशुक्रायनमः॥ ॥
गोचराष्टकवर्गेषुमध्येष्वतिभृगुर्यदा॥तदापूजाप्रकर्त्तव्याशक्रारिष्टविना
शिनी॥१॥स्थाप्येनंतंडुलैःश्वेतैःश्वेतवस्त्रैर्भृगुंततः॥पंचकोणंलिखेत्स-
म्यंतस्मिन्काव्यंसमर्हयेत्॥२॥सोमतुल्याकृतिंप्राज्ञंदानवानांपुरोहितम्॥
भ्रातारंसर्वदैत्यानांशक्रमावाहयाम्यहम्॥३॥भोभोभोजकटेजातःशक्रः
श्वेताश्ववाहनः॥समागच्छचतुर्बाहोभृगुगोत्रविभूषण॥४॥परियाक्षा
वलीहस्तकमंडलुधरप्रभो॥शक्रवस्त्रेवपत्रेषुशक्रज्योतिःप्रपूजयेत्॥५॥
तंडुलैश्चंदनैःपुष्पैःश्वेतैर्वाकमलैस्तथा॥स्फप्रभैराजपुष्पैश्चकालोत्थैःश-
तपत्रकैः॥६॥पूजयेद्भार्गवंचैवमेकविंशतिनामभिः॥प्रणवाद्यैश्चतुर्थ्यंतैः
पंचकोणेप्रपूजयेत्॥७॥भृगुपुत्रायकाव्यायनमश्चोशनसेक्रमात्॥दै-

त्साचार्याय शुक्राय भार्गवाय द्विजन्मने ॥८॥ कृतवे कृतुरूपाया मृतसंजीव-
नीभृते ॥ पूर्वगीर्वाणवंद्याय कवये शूरमंत्रिणे ॥९॥ हृतकर्त्रे च जगतां नेत्ररू-
पाय ते नमः ॥ देवयान्याश्च गुरवे कच विद्याप्रदायिने ॥१०॥ कचजीवितदात्रे च
ययातिश्वशुराय च ॥ ययातिशापदात्रे च पंचकोणाय ते नमः ॥११॥ एभिश्च
नामभिः पूज्यः पंचकोणस्थ भार्गवः ॥ चंदनागरुकस्तूरी बिल्वपुष्पोपहारकैः
॥१२॥ आरार्तिकैश्च नैवेद्यैर्नानापक्वान्नसंभवैः ॥ तांबूलैर्दीपदानैश्च पूजित-
स्तुष्टिदः सदा ॥१३॥ षष्ठेनोशनसा दैत्यो हिरण्यकशिपुर्मृतः ॥ सप्तमेन गतो र
पंपराज्यभ्रष्टो युधिष्ठिरः ॥१४॥ दशमेन रघुश्रेष्ठो रामः प्रव्रजितो वनम् ॥ द्वादशे
नैव शुक्रेण रावणो निधनं गतः ॥१५॥ गोचरे जन्मकाले वा यदा निष्टो भृगुर्भवे
त् ॥ तदा पूजा प्रकर्तव्या दानानि विविधानि च ॥१६॥ जपो होमस्तथा शांतिस्स्तु
तिपाठः प्रयत्नतः ॥ कर्तव्यो वरये द्विप्रं शास्त्रज्ञं मंत्रकोविदम् ॥१७॥ विप्रे प्रस-

न्मेशक्रोपिप्रसन्नः स्यान्नसंशयः॥तस्माद्रूप्यैश्चरत्नैश्चसकवर्णैर्यानसंन्वयैः
॥१८॥घृतैश्चशर्कराभिश्चफलैःशाकैःसमाहितः॥पश्चाच्छुक्रस्यप्रीत्यर्थंदद्या
द्दानंद्विजन्मने॥१९॥पूजाकर्त्रेप्रदातव्यंगणाकायप्रयत्नतः॥तद्दानानिप्रवक्ष्या
मिभार्गवस्यमहात्मनः॥२०॥तंडुलाश्वेतवस्त्राणिवज्रंनीलतुरंगमः॥धेनुश्च
शर्कराकांस्यंपात्रंचाथसुवर्णकम्॥२१॥राजतंकमलंदद्याद्गंधद्रव्याणिया
नि च॥एतच्छांतिकरंप्रोक्तंदानंभार्गवतुष्टिदम्॥२२॥स्तुतिपाठंप्रकुर्याच्च
प्रांजलिःप्रयतोद्विजः॥यजमानःप्रयत्नेनशृणुयाद्भक्तिसंयुतः॥२३॥नमस्ते-
भार्गवश्रेष्ठदैत्यदानवपूजित॥वृष्टिरोधप्रकर्त्रेचवृष्टिकर्त्रेनमोनमः॥२४॥
देवयानिपितस्तुभ्यंवेदवेदांगपारग॥परेणतपसाशुद्धशंकरंलोकशंकर
म्॥२५॥प्राप्तोविद्यांजीवनाख्यांतस्मैशुक्रात्मनेनमः॥२६॥नमस्तस्मैभ-
गवतेभृगुपुत्रायवेधसे॥तारामंडलमध्यस्थस्वभासाभासितांबर॥२७॥

यस्योदयेजगत्सर्वंमंगलार्हंभवेदिह॥अस्तंयातेत्यरिष्टंस्यात्तस्मैमंगलरूपिणे
॥२८॥त्रिपुरावासिनोदैत्यान्शिवबाणप्रपीडितान्॥ विद्ययाजीवयच्छुक्रोन-
मस्तेभृगुनंदन॥२९॥ययातिगुरवेतुभ्यंनमस्तेकविनंदन॥बलिराज्यप्रदोजीवन
स्तस्मैजीवात्मनेनमः॥३०॥भार्गवायनमस्तुभ्यंपूर्वंगीर्वाणवंदित॥जीवपुत्राययो
विद्यांप्रादात्तस्मैनमोनमः॥३१॥नमःशुक्रायकाव्यायभृगुपुत्रायधीमहि॥न
मःकारणरूपायनमस्तेकारणात्मने॥३२॥स्तवराजमिमंपुण्यंभार्गवस्यमहा-
त्मनः॥यःपठेच्छृणुयाद्वापिलभतेवांछितंफलम्॥३३॥पुत्रकामोलभेत्पुत्रा
न्श्रीकामोलभतेश्रियम्॥राज्यकामोलभेद्राज्यंस्त्रीकामःस्त्रियमुत्तमाम्॥
॥३४॥भृगुवारेप्रयत्नेनपठितव्यंसमाहितः॥अन्यवारेतुहोरायांपूजयेद्भृगुनं
दनम्॥३५॥रोगार्त्तोमुच्यतेरोगाद्भयार्त्तोमुच्यतेभयात्॥यद्यत्प्रार्थयतेजंतु
स्तत्तत्प्राप्नोतिसर्वदा॥३६॥प्रातःकालेप्रकर्त्तव्याभृगुपूजाप्रयत्नतः॥सर्वपा

पविनिर्मुक्तःप्राप्नुयात्तशिवसन्निधिम् ॥३७॥ ॥इतिश्रीस्कंदपुरा-
णेशुक्रपूजाविधिस्तोत्रंसंपूर्णम् ॥ ॥अथशुक्रैकविंशतिनामा
नि॥भृगुपुत्रायनमः॥१॥काव्यायनमः ॥२॥उशनसेनमः॥३॥ क्रतवेन
मः॥४॥दैत्याचार्याय०॥५॥शुक्रायनमः॥६॥भार्गवाय०॥७॥ मृतसं-
जीविनेन०॥८॥ द्विजात्मनेनमः॥९॥क्रतुरूपायनमः ॥१०॥ पूर्वगीर्वा
णवंद्याय०॥ ११॥ कवयेनमः॥१२॥असुरमंत्रिणेन०॥ १३॥ हिमनेत्राय
न०॥१४॥जगतांनेत्ररूपाय०॥ १५॥कचविद्याप्रदायिनेनमः॥१६॥देव-
यानीगुरवेनमः॥१७॥कचजीवितदात्रेन०॥१८॥ययातिश्वशुराय०॥
॥१९॥ययातिशापदात्रे०॥ २०॥ पंचकोणायन०॥२१॥ ॥इत्येकविंश
तिनामानि॥ ॥अथशनिपाठः॥ ॥ईश्वरउवाच॥ ॥रघुवंशे-
तिविख्यातोराजादशरथःप्रभुः॥बभूवचक्रवर्त्तीचसप्तद्वीपाधिपोबली

॥१॥ कृत्तिकांतेशनिर्यातोदैवज्ञैर्ज्ञापितोहि सः॥ रोहिणींभेदयित्वातुश-
निर्यास्यतिसांप्रतम् ॥२॥ शकटंभेदयित्वातुसुरासुरभयंकरः॥ द्वादशा
ब्दंतुदुर्भिक्षंभविष्यतिसुदारुणम् ॥३॥ इतिश्रुत्वाततोवाक्यंमंत्रिभिःस
हपार्थिवः॥ मंत्रयामासकिमिदंभयंकरमुपस्थितम्॥४॥ देशाश्चनगर
ग्रामाभयभीतास्तदाभवन्॥ ब्रुवंतिसर्वलोकाश्चक्षयएषसमागतः॥५॥
आकुलंचजगद्दृष्ट्वापौरजानपदादिषु॥ पप्रच्छप्रयतोराजावसिष्ठंमुनि
पुंगवम्॥६॥ संविधानंकिमस्यास्तिवदमांद्विजसत्तम॥ ॥वसिष्ठउवा
च॥ ॥प्रजानांपरिरक्षार्थंतस्मिन्भिन्नेकुतःप्रजाः॥७॥ प्राजापत्यंसन
क्षत्रंशनिर्यास्यतिसांप्रतम्॥ इमंयोगमसाध्यंतुब्रह्मशक्रादिभिःसुरैः
॥८॥ ॥स्कंदउवाच॥ ॥ततःसंचिंत्यमनसासाहसंपरमंनृ
पः॥ समादायधनुर्दिव्यंदिव्यायुधसमन्वितम् ॥९॥ रथमारुह्यवेगेन

गतोनक्षत्रमंडले॥ शकटंयोजनंलक्षंसूर्यस्योपरिसंस्थितम्॥१०॥ रोहिणीं
पृष्ठतः कृत्वाराजादशरथस्तदा ॥रथेचकांचनेदिव्यमणिरत्नविभूषिते॥
॥११॥हंसवर्णैर्हयैर्युक्तेमहाकेतुसमन्विते॥दीप्यमानोमहारत्नैः केयूरमुकु-
टोज्वलः॥१२॥विराजितस्तदाकाशेद्वितीयइवभास्करः॥ आकर्णपूरितंचा
पिसंहारास्त्रंनियोजयत्॥१३॥कृत्तिकांतेशनिःस्थित्वाप्रविशन्किलरोहि
णीम्॥दृष्ट्वादशरथस्याग्रेसौरीशंभ्रुकुटीमुखम्॥१४॥संहारास्त्रंशनि
र्दृष्ट्वासुरासुरभयंकरम्॥हसित्वातद्भयात्सौरिरिदंवचनमब्रवीत्॥१५॥पौ
रुषंतवराजेंद्रपरंरिपुभयंकरम्॥देवासुरमनुष्याश्चसिद्धविद्याधरोरगाः
॥१६॥मयाविलोकिताराजन्भस्मसाच्चभवंनिते॥तुष्टोहंतवराजेंद्रतपसा
पौरुषेणाच॥१७॥वरंब्रूहिप्रदास्यामिययथेष्टंरघुनंदन॥ ॥दशरथउवा
च॥ ॥रोहिणींभेदयित्वातुनगंतव्यंत्वयाशने॥ १८॥ सरितःसागरा-

श्चैवयावच्चंद्रार्कमेदिनी।।याचितंतुमयासौरेनान्यमिच्छाम्यहंवरम्।।१९।।
एवमस्तुशनिःप्राहवरंदत्वातुशाश्वतम्।।प्राप्यैवंतुवरंराजाकृतकृत्योभवत्त-
दा।।२०।।द्वादशाब्दंनदुर्भिक्षंभविष्यतिकदाचन।।कीर्तिरेषामदीयाचत्रैलोक्ये
तुभविष्यति।।२१।।ततोवरंचसंप्राप्यहृष्टरोमासपार्थिवः।।उपतस्थेधनुस्त्य
क्त्वाभूत्वाचैवकृतांजलिः।।२२।।ध्यात्वासरस्वतींदेवींगणनाथंविनायकम्।।
गुरुपादांबुजंस्मृत्वास्तोत्रंकर्त्तुंप्रचक्रमे।।२३।।राजादशरथःस्तोत्रंसौरेरिद
मथाकरोत्।।ओम्।।नमःकृष्णायनीलायशितिकंठनिभायच।।नमःपुरुषगा
त्रायस्थूलरोमाश्चितायच।।२४।।नमोनीलमणिग्रीवनीलोत्पलनिभायच
।।नमोनित्यंक्षुधार्त्तायत्यतृप्तायनमोनमः।।२५।।नमःकालाग्निरूपायकृ
तांतायनमोनमः।।नमोघोरायरौद्रायभीषणायकरालिने।।२६।।नमस्तेसर्व 
भक्षायबलीमुखनमोस्तुते।।सूर्यपुत्रनमस्तेस्तुकाश्यपायनमोनमः।।२७।।

॥नमोमंदगतेतुभ्यंकृष्णावर्णनमोस्तुते॥तपसादग्धदेहायनित्यंयोगरताय
च॥२८॥ज्ञानचक्षोनमस्तेस्तुकश्यपात्मजसूनवे॥तुष्टोददातिराज्यंचरु-
ष्टोहरतितत्क्षणात्॥२९॥देवासुरमनुष्याश्चपशुपक्षिमहोरगाः॥त्वयावि
लोकिताःसर्वेदैन्यमाशुव्रजंतिते॥३०॥शक्रादयःसुराश्चैववमुनयःसप्ततारकाः
॥ स्थानभ्रष्टाभवंत्येतेत्वयादृष्टिविलोकिताः॥३१॥ देशाश्चनगरग्रामाद्वी
पाश्चैवद्रुमास्तथा॥त्वयाविलोकितास्तेचविनाशंयांतिमूलतः॥३२॥प्रसादं-
कुरुमेसौरेवरार्थत्वामुपागतः॥एवमुक्तस्तदासौरिग्रहराजोमहाबलः॥३३॥
अब्रवीच्चशनिर्वाक्यंहृष्टरोमासभास्करिः॥तुष्टोहंतववराजेंद्रस्तवेनानेनसु
व्रत॥३४॥वरंब्रूहिप्रदास्यामियथेष्टंरघुनंदन॥ ॥राजोवाच॥ ॥
अद्यप्रभृतिभोसौरेपीडाकार्यानकस्यचित्॥३५॥देवासुरमनुष्याणांपशु
पक्षिसरीसृपाम्॥ ॥शनिरुवाच॥ ॥गृह्णंतीतिग्रहाज्ञेया-

स्तेनपीडाकरास्तथा॥३६॥अथत्वया र्थितंराजन्युक्तंनैवददामिते॥ 
॥राजोवाच॥ ॥आदिशत्वंवरंमत्यंयुक्तमस्मिन्महामते॥३७॥ ॥
॥शनिरुवाच॥ ॥त्वयाप्रोक्तमिदंस्तोत्रंयःपठिष्यतिमानवः॥एकका
लंद्विकालंवापीडांमुंचामितस्यवै॥३८॥श्रावणेमासियोदानंकुर्याच्छ
निदिनेतथा॥माषांश्चैवतिलांश्चैवदद्यात्तंपीडयामिनो॥३९॥पुरुषाश्च
स्त्रियोवापिमद्भयेनोपपीडिताः॥स्तोत्रमेतत्पठिष्यंतिस्नात्वाचविजितें-
द्रियः॥४०॥पीडांतस्यनचैवाहंकरिष्यामिकदाचन॥देवासुरमनुष्याश्च
सिद्धविद्याधरोरगाः॥४१॥येपठिष्यंतिमत्स्तोत्रंनाहंतेषांप्रपीडकः॥यःपु
नःश्रद्धयायुक्तःशुचिःस्नातःसमाहितः॥४२॥शनियंत्रंसमभ्यर्च्यप्र-
तिमांलोहजांमम॥मह्निगंधपुष्पैश्चदीपैर्नैवेद्यधूपकैः॥४३॥तिलमा
षप्रदानैश्चकृष्णासुरभिदानतः॥माषदानंतिलैर्मिश्रंदद्यान्नैवेद्यमुत्तमं

म्॥४४॥लोहंचदक्षिणांदद्यात्वृषभंचधुरंधरम्॥ तिलदानेनसंतोष्यस्तो
त्रेणानेनसंस्तुतः॥४५॥ गोचरेजन्मलग्नेचदशास्वंतर्दशासुच॥रक्षामि
सततंतस्यपीडामन्यग्रहादपि॥४६॥ पूजयित्वाजपेत्स्तोत्रंभूत्वाचैवकृतां
जलिः॥ तस्यपीडांनचैवाहंकरिष्यामिकदाचन॥४७॥मृत्युस्थानगतोपि
द्वादशाजन्मगतोपिवा॥तस्यपीडामत्प्रभावान्मच्चैवान्यग्रहादपि॥ चतुर्थे
स्थानगोवापितद्वत्सौम्यगतोपिवा ॥४८॥अनेनचविधानेनपीडामुक्तंजग
द्भवेत्॥वरद्वयंतुसंप्राप्यराजादशरथस्तदा॥४९॥ मेनेकृतार्थमात्मानंनम
स्कृत्यशनैश्चरं ॥शनिनासमनुज्ञातःस्वस्थानमगमत्ततः॥५०॥स्वस्था
नंचनृपोगत्वाप्राप्तैश्वर्योभवत्तदा॥ यइदंप्रातरुत्थायसौरेर्वारेयदापठेत्॥
॥५१॥पूजयित्वाशनिंचैवतंस्यतुष्यतिभास्करिः॥सर्वाभीष्टप्रदोनित्यंभवि
ष्यतिनसंशयः॥५२॥ ॥ईश्वरउवाच॥ ॥कोणस्थःपिंगलोबभ्रुः

कृष्णोरौद्रांतकोयमः॥ सौरिः शनैश्वरोमंदः पिप्पलादेनसंस्तुतः॥५३॥ ए
तानिदशनामानिप्रातरुत्थाययःपठेत्॥ तस्यशनिकृतापीडानभवेत्तुकदा
चन॥५४॥ एतत्तेकथितंदेविमाहात्म्यंशनिदैवतम्॥ सर्वदुःखप्रशमनंस
र्वाभीष्टफलप्रदम्॥५५॥ ॥इतिश्रीस्कंदपुराणेप्रभासक्षेत्रमाहात्म्ये
दशरथकृतंशनिस्तोत्रंसंपूर्णम्॥ ॥अथराहुपाठः॥ ॥गर्गउवा-
च॥ ॥गुरुंनत्वागिरिंनत्वाहरिंनत्वापुनःपुनः॥ राहुपूजांप्रवक्ष्यामिग्र-
हत्वंयःसमागतः॥१॥ आदित्याद्याग्रहाःसर्वेसैंहिकेयवशंगताः॥ तस्माच्चपू
जनंवक्ष्येसर्वपीडाविनाशनम्॥२॥ अमृतोन्मथनेदेवाहर्षनिर्भरमानसाः॥
क्षीराख्यमुदधिंसर्वेदानवाश्चसुदान्विताः॥३॥ उदधेरमृतंजातमसुरैश्चवृ
तंतदा॥ योषिद्रूपंसमासाद्यददौदेवगणेहरिः॥४॥ मोहयित्वासुरान्सर्वान्
पाययित्वासुरान्यदा॥ तदाराहुःसमाज्ञायचंद्रसूर्यांतरंगतः॥५॥ विभज्या

मृतमाज्ञायराहुंपीतामृतंहरिः॥सूचितश्चंद्रसूर्याभ्यांजहारमस्तकंतदा॥६॥
द्विधाभूतोग्रहत्वंचप्राप्तोविष्णुनाहतः॥प्राणिनांदुःखदोराहुः पूजनात्सु-
खदोभवेत्॥ ७॥ तस्मात्पूजांप्रवक्ष्यामिराहोःसंक्षेपतोधुना॥कृष्णकंब
लकृष्णान्नंलोहंलवणमेवच॥८॥ ॥गर्गउवाच॥ ॥राहुर्ग्रहोमहा
क्रूरःप्राणिनांदुःखदायकः॥शांत्यर्थंहिसदापूज्यःसदारिःसोमसूर्ययोः॥
॥९॥पूर्वोक्तविधिनाकार्यंपीठंलोहमयंतथा॥कुंकुमेनसदाकार्योराहुःकाय
विवर्जितः॥१०॥आयंगौरित्यृचापूज्योदिशांनैर्ऋत्यगोचरे॥विबुधान्नाश
नःकालःकरालवदनोजनः॥११॥राहुश्चैवसदापूज्योदिशांनैर्ऋत्यगोचरे॥
षट्कोणमंडलेपूज्योगंधपुष्पाक्षतैस्तथा॥१२॥ फलंतुनारिकेलंचधूपं-
दीपमतःपरम्॥नैवेद्यंमाषमांसंचघृतंवाथप्रकल्पयेत्॥१३॥दक्षिणांच-
तथाछगंमाषांश्चापिप्रकल्पयेत्॥ब्राह्मणान्भोजयेत्तत्रमाषान्नैःप्राय

रा॰ सैंस्तथा॥१४॥ विधुंतुदप्रसीदत्वंसदारेशशिसूर्ययोः॥शांत्यर्थंतुमयादत्तं स्तो॰
३५ गृह्णाणार्घ्यंनमोस्तुते॥१५॥करालवदनःश्रेष्ठःसर्वव्याधिविनाशकः॥स्फरत्वा
र्थंतुमयापूज्यःप्रसीदपरपीडन॥१६॥ मौंदेस्फरेकुलेजातःसिंहारूढोवरःप्र
भुः॥विधिवत्पूजितोदेवोममशांतिंप्रयच्छतु॥१७॥तमोमयमहाक्रूररुद्र-
सर्पानुगामिनः॥ सर्वविघ्नहरंदेवंस्वभानुंप्रणमाम्यहम्॥१८॥स्नानतत्रप्र
कर्त्तव्यंदूर्वाःकृत्वाशिरोपरि॥कयानश्चेतिमंत्रेणऋचंवाचंतुसूक्तकम्॥
॥१९॥रक्तकुंभेसमालिख्यसहिरण्यैःसपल्लवैः॥प्रतिष्ठाप्यततःपूजांमंत्रै
श्चपूर्वतोदितैः॥२०॥अन्यैश्चपूर्वमंत्रैश्चत्यभिषेकंघटोन्द्धृतैः॥ कांडात्कांडा
च्चमंत्रेणआज्यहोमंततःपरम्॥२१॥आघारावाज्यभागौच्चआदिष्टाज्या
हुतीर्दश॥चरुहोमःप्रकर्त्तव्योमंत्रेणानेनधीमता॥२२॥ततःस्विष्टकृतं ३५
शांतिहोमस्यपृष्ठतस्ततः॥सर्वशांतिमवाप्नोतिग्रहाःसर्वेशुभप्रदाः॥२३

॥इत्यमृतपंचरात्रेराहुपूजा॥ ॥कलश॥लोह॥दर्भपत्र॥मोध्य॥गजमद॥
कस्तूरीवालोभृंगराज॥दूर्वा॥उपलोष्ठ॥रक्तवस्त्र॥नारिकेर॥नषला॥अग
रहोईदूर्वांकुरक॥अथराहुमंत्रः॥स्नानद्रवाणी॥लोह॥दर्भ॥तिलपत्र॥
कृष्णातिल॥मुद्ग॥हस्तीमद॥कस्तूरिका॥एतान्येवकुशमूलेतिविशेषः॥
राहवेनमः॥ब्रह्माऋषिः॥पंक्तिच्छंदः॥राहुर्देवता॥रांबीजम्॥वेशक्तिः॥
रांरींरूंरैंरौंरः॥इतिषडंगः॥ध्यानम्॥वंदेराहुंधूम्रवर्णमर्धकायंकृतांजलि
म्॥विकृतास्यंरक्तनेत्रंधूम्रालंकारमन्वहम्॥१॥अंगग्रहादिदिक्पालैः स्थी
पित्वावरणानिच॥ ॥अक्षरसहस्रजपपुरश्चरणम्॥दशांशेन आज्य-
होमः॥इतिराहुमंत्रः॥अष्टौदूर्वासमिधोदधिमधुघृताक्ताः अष्टौतिलाहु
तयोघृताक्ताःअन्नाज्याहुतिसहितायहुताः तासांहोमेन अस्ययजमानस्य
राहुःशांतिदःपुष्टिदःधनदःपुत्रदोवरदोभवतु॥ सैंहिकेयस्तमोराहुः कज्ज

लाचलसन्निभः॥ यःपर्वणिमहाकायोग्रसतेचंद्रभास्करौ॥ विष्णुनायस्य
मूर्धावैछिन्नोभक्षयतोमृतम्॥ योजितोग्रहभावेनत्वामहंशरणंगतः॥२॥
एतांराहुस्तुतिंचैवयःपठेच्चद्विजोत्तमः॥ नभवेत्तद्भवापीडातस्यायुश्चप्र-
वर्धते॥३॥ ॥इतिनारदपंचरात्रोक्तराहुपूजनदानहोमस्तुतिपाठःस
मासः॥ ॥सूर्यखड्गसुवर्णनागसहितंधान्यैःफलैःसप्तभिः॥कूष्मांड
तिलतंडुलाश्चलवणंकस्तूरिकांसर्षपान्॥ नारीकेलसुपानहौशुभमणि-
गोमेदकंशय्यकांदद्यात्सीसककृष्णधान्यसहितंराहुग्रहप्रीतये॥१॥इति
राहुदानश्लोकः॥ ॥अथकेतुस्तोत्रम्॥ ॥श्रीकेतवेनमः॥नंदउवाच
॥देवदेवजगन्नाथशूलपाणेवृषध्वज॥ कथयस्वप्रसादेनकेतुपूजाविधा
नतः॥१॥स्नानमंत्राःकतिप्रोक्ताःकथंमंत्रंजपेद्द्विजोः॥ किंप्रमाणंतुकर्त्त-
व्यंजातकंस्कसुरवंशुभम्॥२॥शुभेचंद्रेसुहूर्त्तेवाकेतुपूजांसमारभेत्॥

चत्वारश्चाव्रणाःकुंभाश्चतुर्दिक्षुव्यवस्थिताः॥३॥ पीतचंदनलिप्तांगागं
धतोयेनपूरिताः॥ पंचपल्लवसंयुक्ताःपीतवस्त्रेणवेष्टिताः॥४॥पूर्वकुंभे-
तुविन्यस्यवचामारोहारिद्रकाः॥दक्षिणेसहदेवींचसुरामांसिजटातथा॥५
॥पश्चिमेहरितालंचउशीरंतगरंतथा॥ फलमूलरसंसंयुक्तमक्षतान्चंद
नंतथा॥६॥ उत्तरेतुघटेदेयाः सर्वौषध्यश्चसर्वशः॥ अग्निमीळेइषेत्वाच
अग्नआयाहिमेवच॥७॥ शन्नोदेवीतिचप्रोक्ताःपूर्वादिक्रमयोगतः॥ पूर्वे
कुंभेश्रियायुक्तंदक्षिणेच्यामपस्तथा॥८॥ पश्चिमेमधुवाताश्चिरानोभ
द्रास्तथैवच॥ व्याघ्रचर्मसमास्तीर्याप्यथवावस्तचर्मच॥९॥ रुद्रासनस
मायुक्तः कुशानास्तीर्यतत्रच॥ सफलांवारुणींशाखांमूर्ध्निधृत्वाभिषिं-
चयेत्॥१०॥एतत्सर्वंप्रयत्नेनवेशयासुत्तरेपातु॥ ऋचंवाचंचअध्याय
मुत्तरेनारायणंतथा॥ ११॥ पुरुषसूक्तंपठन्नेवाकलशैरभिषिंचयेत्॥२॥

हुवत्पूजयेत्केतुंराहुवद्दानमाचरेत्॥१२॥एतत्सर्वंमया प्रोक्तंकेतुपूजनमुत्त
मम्॥राहुदेहात्समुद्भूतंतंकेतुंप्रणमाम्यहम्॥१३॥ पूजनान्हरतेदुःखंसःख
सौभाग्यवर्धनम्॥रौद्रात्मकंतथाघोरंधूम्रवर्णंमहोत्कटम्॥१४॥ नमामि-
ग्रहराजंच प्रतिष्ठा पूजनेषुच॥ कृतंयद्यधुनास्वामिन्गृहाणार्घ्यंच पूजन
म्॥१५॥ ॥इतिमंत्रशास्त्रोक्तंकेतुपूजनंसमाप्तम्॥ ॥अथपा
ठः॥ ॥स्कंदउवाच॥ ॥मृत्युपुत्रः शिखीकेतुश्चानलोत्पातरूपधृ
क्॥बहुरूपश्चधूम्राभःश्वेतःकृष्णश्चपीनभृत्॥१॥ छायारूपीध्वजः
पुच्छोजगत्प्रलयकृत्सदा॥अदृष्टरूपोदृष्टश्चज्जंतूनांभयकारकः॥२॥
नामान्येतानिकेतोश्चनित्यंयःप्रयतः पठेत्॥केतुपीडानतस्यास्तिस
र्पचोराग्निभिर्भयम्॥३॥ दानंदद्याद्गृहज्ञायवैडूर्यंकेतवेतदा॥ यःप
ठेत्प्रयतोनित्यंपक्षंपक्षार्धमेववा॥ मुक्तःसर्वभयेभ्योपिसर्वान्का-

मानवाप्नुयात् ॥५॥ ॥ इतिश्रीस्कंदपुराणेकेतुस्तोत्रंसंपूर्णम्॥ ॥
॥ श्रीआदित्यादिनवग्रहार्पणमस्तु॥ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ॥
हें पुस्तक बापुहरशेट देवळेकर यांणिं आपले छापखान्यांत छापिलें. मुकाम मुंबई. शके १७७९ पिंगलनामसंवत्सरे. ॥छ॥ ॥छ॥ ॥छ॥

